कंसध्वंसनकान्तिमत्युपयमौ काव्ये तथा राघव-
ख्यातिं मञ्जुळभाषिणीं कमलिनीहंसाभिधां नाटिकाम् ।
चित्राख्यामपि मञ्जरीमकृत यश्शृङ्गारसर्वस्वम-
प्यानन्दोत्तरराघवं च विदधे भाणं क्रमान्नाटकम् ॥

यश्च श्रीरघुनाथभूपविजयं साहित्यसाम्राज्यम-
प्यालङ्कारिकसर्वमर्मविशदीकारक्षमं निर्ममे ।
योऽकार्षीदपि काव्यदर्पणमथालङ्कारचूडामणिं
तेनेदं खलु रुक्मिणीपरिणयाभिख्यं च काव्यं कृतम् ॥

तस्मात्केशवदीक्षितादुदभवन्नाम्ना तपोवैदुषी-
विज्ञानैः प्रथितः पतञ्जलिरिति प्रत्यब्दसत्रव्रतः ।
तस्मात्केशवदीक्षितस्समुदभूदद्वैतविद्यागुरु-
स्तस्माच्चाजनि रामचन्द्रमखिराट् षड्दर्शनीवल्लभः ॥

यश्चक्रे लवणासुरस्य निधनं चम्पूप्रबन्धं तथा
ख्यातं केरळभूषणं नवरसासारैकवाराकरम् ।
तस्मादाविरभूदनन्तमहिमा साहित्यसौहित्यवा-
नार्यः केशवदीक्षितस्तदुदितश्श्रीयज्ञवेदेश्वरः ॥

यो वासिष्ठं (?) गरिष्ठामकुरुत सुकृतैः कर्मनिष्ठां लघिष्ठां
सत्रैस्सुत्राममुख्यानखिलदिविषदः प्रीणयन्प्रीणयन्नॄन् ।
वेदैश्शास्त्रैः पुराणैस्स्मृतिमुनिसमयैर्निश्चितार्थः प्रजानां
धर्माधर्मव्यवस्थामतनुत भुवने निग्रहानुग्रहाभ्याम् ॥

तस्यासीत्केशवाख्यस्सकलनिगमसिद्धान्तसिद्धार्थवेत्ता
सूनुस्तस्माच्च जज्ञे नृपशतमहितो यज्ञवेदेश्वराख्यः ।

जिग्ये प्रज्ञासमज्ञान्प्रतिभटविदुषोऽवज्ञया यस्सभाया-
मज्ञाञ्जिज्ञासमानानतनुत बहुधा ज्ञानविज्ञानराशीन् ॥

तस्मात्सारस्वताब्धेस्समजनि सहजश्रीरपङ्कः कलावा-
न्निष्यन्दैस्स्वै रसानामखिलसुमनसः प्रीणयन्विष्णुपादे ।
सक्तो मित्रानुवर्ती निरवधिकमुदं वर्धयन्नुच्छ्रितात्मा
स्वच्छस्सर्वज्ञचूडामणिरवनिसुराधीश्वरो **बालचन्द्रः** ॥

अर्वाग्यष्षोडशाब्दात्पितुरधिगतषड्दर्शनीसर्वसारो
विद्यावित्तान्समस्तान्प्रतिविबुधसमं वावदूकाञ्जिगाय ।
तन्त्राण्यत्यद्भुताभिर्विषयविशयसिद्धान्तचोद्यार्थिनीभि-
र्हृद्याभिः कारिकाभिः करबदरफलस्पष्टदृष्टान्यचष्ट ॥

**यस्सौपर्णं विजयम**तनोच्चम्पुकाव्यं तथान्या-
न्याख्यानादीन्यपि डिममुखान्यद्भुतार्थान्यतानीत् ।
प्रज्ञावद्भिः प्रतिपदकृतान्पूरयन्यस्समस्या-
भेदानाधाद्भुवनमुदमावत्सरादेकविंशात् ॥

**वेङ्कटसुब्रह्मण्या**परनाम्नस्तस्य सूरिवर्यस्य ।
तनयस्सुनयो विनयात्प्रणयज्ञनयज्ञनस्य निखिलस्य ॥

**श्रीबालयज्ञवेदेश्वर** इति कुहचित्प्रतीतनामाहम् ।
विवृणोमि विपुलहृदयं काव्यं **तद्रुक्मिणीविवाहाख्यम्** ॥

तादृक्षस्य महाकवेः कृतिमनल्पार्थामुदारामिमां
व्याकर्तुं कतमोऽहमप्यथ महत्तच्चापलं क्षम्यताम् ।
आपातालनभस्थलान्तविसरत्पाथोभरं दुस्तरं
वार्धिं जानत एव किन्तु हृदयं बाहायुगाप्लावनम् ॥

ये काव्येष्वनतिप्रबुद्धमतयो ये चाप्यबोधभ्रमा-
त्काव्यस्यास्य विलोकने प्रवचने वीतादरास्सूरयः ।
तद्धैयात्यकरावलम्बनकृते सैषा मम व्यापृति-
स्तन्मे साहसमीदृशं कृतधियस्सन्तः क्षमन्तामिदम् ॥

भास्वद्भिः कविसूक्तिमौक्तिकगणैर्ग्रथ्नामि बुध्या स्वया
मालां योजनया गुणेन सुदृशां हृत्कण्ठभूषाकृते ।
सा चेन्नानुमता सतां यदि तदा नव्याममीभिः पुन-
र्भव्यामारचयन्तु काव्यमिदमप्याकल्पमाकल्पताम् ॥

यद्यप्यत्र विवेचिता न च गुणाश्शय्यारसालङ्कृति-
छन्दोऽप्यङ्गविपाकवृत्तिविभवा रीतिर्नवा प्रक्रिया ।
यान्त्येव प्रमुदं तथापि सुधियः प्रेमानुरोधान्मयि
प्रायो लोहलबालवाचि दधते मोदं महान्तो न किम् ॥

प्रबन्धेऽस्मिन्निन्धे बहुगुणरसालङ्कृतिभरः
प्रधानं बालानामनतिगहनं यच्च भवति ।
अवश्याख्येयं तल्लिखितमितरद्यन्मम पुन-
र्मनीषातीतं तन्निखिलमिदमाभाति सुधियाम् ॥

अज्ञानानवधानाभ्यामप्यावश्यकहेययोः ।
अलेखनालेखनोत्थमागस्सोढव्यमत्र मे ॥

पद्यानि बाणवशतः पतिताक्षराणि
यानीह मामकपदैर्घटितानि सन्तः ।
भूषान्तरे क्वचन भर्मणि वर्णहीन-
धात्वन्तरेण घटनामिव मर्षयन्तु ॥

ह्रते कलियुगे वर्षैर्वेदाग्निग्रहसागरैः ।
यज्ञवेदेश्वरेणैषा कृता मौक्तिकमालिका ॥

इह हि—

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यःपरनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥

इति प्रामाणिकप्रसिद्धया पुण्यश्लोकगुणवर्णनरूपकाव्यस्य यशःप्रमुखबहुतरदृष्टादृष्ट-फलोपधायकत्वे निश्चिते तत्रापि भगवच्चरितरूपत्वेन परमपुरुषार्थभूतमोक्षोपयोगि-भगवद्भक्त्युन्मेषं प्रति च प्रभुसम्मिताच्छब्दप्रधानाच्च प्रत्यवायभीत्यः प्रवर्तकाद्वेदात् तथा सुहृत्सम्मितेभ्योऽर्थप्रधानेभ्यो हिताहितविचारसापेक्षतया प्रवर्तकेभ्यः पुराणादिभ्यश्च कान्तासम्मितस्य रसप्रधानस्य श्रोतुस्सरसतापादनेनाविचारत-स्सरभसप्रवर्तकस्य काव्यस्याभ्यर्हितत्वेन सहृदयानामात्मनश्च तथाविधनिखिल-पुरुषार्थानाशासानो लोकानुग्रहाय वसुदेवात्कृतावतारस्य भगवतः कृष्णस्य प्राधान्येन रुक्मिणीपरिणयप्रपञ्चनरूपं **रुक्मिणीकल्याणाख्यं** काव्यमारभमाणः **श्रीराजचूडामणिदीक्षितो** नाम महाकविः प्रारिप्सितप्रबन्धपरिसमाप्तिपरिपन्थि-प्रत्यूहप्रत्याख्यानाय स्वाभीष्टदेवतात्मकं स्त्रीपुंसाकारैकशरीरावलम्बनेन स्वस्य जगज्जनकत्वादिकमभिव्यञ्जयन्तं भगवन्तमर्धनारीश्वरमधिकृत्य श्रेयःप्रार्थनरूपं मङ्गलमाचरन्स्वस्याग्रजन्मानमर्धनारीश्वरनामानमात्मनो विद्यागुरुमप्यर्थादनुमन्त्रते—

**वामालकावल्लभभावमुद्रासीमाविभागेन्द्रमणीशिलेव ।**
**रोमावली राजति यस्य मध्ये सोमावतंसः स सुखाय भूयात् ॥१॥**

**वामेति**—यस्य प्रस्तूयमानस्य अर्धनारीश्वरस्येत्यर्थः । मध्ये वामदक्षिण-भागयोरन्तराळे न पुनर्वलग्ने रोमावल्या नाभेरूर्ध्व एवावस्थानेन मध्यावस्थित्य भावात् । न चोर्ध्वापवर्गायास्सीमाशिलाया मूलावलम्बेनैवावस्थानस्य वक्तव्यतया उरःपर्यन्ताक्रमणं प्रतिभासमात्रमेवेति वाच्यम् । देहावलम्बनेनार्धाङ्गरूपतया तादृशसम्भावनानिमित्ततया मध्यशब्दवाच्यवलग्नोर्ध्वगतनाभेः परत एव

रोमावल्यवस्थानात् वामोर्ध्वभागयोरेव स्त्रीपुंसाकारतया तल्लाञ्छनविवाद-शमनार्थकसीमाशिलात्मतया सम्भाव्यमानया वामदक्षिणभागमध्यावस्थानस्यैव वक्तुर्विवक्षागोचरत्वाच्च । रोमावली लोमपङ्क्तिः कर्त्री । वामाः कुटिलाः, आमूलाग्रं प्रतिपदाकुञ्चिता इत्यर्थः । न पुनर्वलिताग्रभागा इत्यर्थः । तथात्वस्या-सुन्दरत्वात् । अलकाः कुन्तला यस्यास्तादृशी नारी; वल्लभः प्रियः पुमान्; तयोर्नारीनरयोर्भावौ स्त्रीत्वं पुंस्त्वं च तयोर्मुद्राश्चिह्नानि स्त्रीत्वव्यञ्जकस्तन-जघनादीनि तथा पुंस्त्वव्यञ्जकपीनवक्षस्त्वादीनि तासाम् सीमाया विश्राम-देशस्य विभागाय विविच्य प्रपञ्चनाय विवादोपशमफलिकेत्यर्थः । इन्द्रमणीशिलेव इन्द्रमणीमया मरुत्वन्मणिरूपा शिला सीमोपल इव । "रत्नं मणिर्द्वयोः" इत्यमरः । राजति दीव्यति । "राजृ दीप्तौ" इति धातोर्लट् । एतावत्स्त्रीचिह्नेन भाव्यमेतावत्पुरुषचिह्नेनेति व्यवस्थापिका इन्द्रनीलमणिमयी सीमाशिला विधात्रा विहिता किमिति भावः । स सोमावतंसश्चन्द्रशेखरः । सुखायानन्दाय, सञ्चिन्तितसकलफललाभायेति भावः । भूयात् स्यात् । "भू सत्तायां" इति धातोर्लिङ् । प्रजाप्रजननपालनादिषु मातापित्रोस्सहाधिकारात्तथाविधेनैकेनैव शरीरेण जगदुत्पत्त्यादिकमभिव्यञ्जयन् देवोऽस्मानानन्दयत्विति भावः । सीमाविवादस्य तदुपशमस्य चोभयनिरूप्यतया विवादशमनार्थकसीमाशिलाया-मुभयोः स्वामित्ववद्रोमावल्यामुभयचिह्नत्वं न पुनः श्मश्र्वादिवदेकतरस्वाम्यमित्यपि वेदितव्यम् ॥

अस्मत्पितामहचरणास्तु—सुखाय परमपुरुषार्थरूपाय मोक्षायेत्यर्थः । प्रा-पञ्चिकस्य पशुपुत्रकलत्राद्युपभोगरूपस्य सर्वस्यापि सुखस्य क्षुत्तृष्णाकामोपशम-रूपतया तत्र सुखशब्दस्य दुःखाभावमात्रपरस्य उपचरिततया सुखत्वव्यवहारेऽपि निरन्तरनिरतिशयानन्दविस्फूर्तिरूपस्य मोक्षस्यैव स्वारसिकार्थत्वात् । ततश्च सोमश्चन्द्रोऽवतंसो यस्येति व्युत्पत्त्या आध्यात्मिकादितापत्रयापनयनक्षम-श्चन्द्रशेखरो निःश्रेयसाय भूयादित्यभिप्रायमाहुः । अत्रार्थज्ञानपूर्वकत्वाच्छब्द-प्रयोगस्यार्धनारीश्वरात्मकोमामहेश्वरविषयकः कविगतो रतिभावो व्यज्यते । तस्य नारीनरात्मकैकशरीराङ्गीकारे प्रयोजनान्तरालाभेन तयोर्विश्लेषभीरुताया एव हेतुत्वकल्पनावश्यंभावेन सम्मिळितत्वप्रतीत्या सम्भोगशृङ्गारो व्यज्यते । तथा

परिहरणीयतया परिचिन्तितस्यापि विप्रयोगस्य खेदावहतया विप्रलम्भशृङ्गारश्च। प्रबन्धप्राथमिकपद्यप्रतीयमानाभ्यां च ताभ्यां प्रबन्धप्रतिपिपादयिषितयो रुक्मिणीवासुदेवालम्बनयोस्तयोरभिव्यक्तिश्च। अत्र स्त्रीपुंसलाञ्छनान्तराळवर्तित्वक्रमं कृशत्वस्तम्भाकारत्वादिधर्मसम्बन्धेन निमित्तेन रोमावल्यां सीमाशिलातादात्म्यसम्भावना स्वरूपोत्प्रेक्षा। "यत्रान्यधर्मसम्बन्धादन्यत्वेनोपतर्कितम्। प्रकृतं हि भवेत्प्राज्ञास्तामुत्प्रेक्षां प्रचक्षते॥" इति लक्षणात्॥

नन्विवशब्दस्य सादृश्यवाचकतया उपमैवास्तु। मैवम्। तर्हि यत्र क्वचनावस्थितसीमाशिलासाम्यमात्रे वक्तव्ये स्त्रीपुंसलाञ्छनान्तराळवर्तननिमित्तकतत्तल्लाञ्छनसीमाव्यवहारोपशमार्थत्वादिविशेषगवेषणप्रयासवैयर्थ्यापातात्। अत एव "यदायमुपमानांशो लोकतस्सिद्धिमृच्छति। तदोपमैव येनेवशब्दस्सादृश्यवाचकः॥ यदा पुनरसौ लोकादसिद्धः कविकल्पितः। तदोत्प्रेक्षैव येनेवशब्दस्संभावनापरः॥" इति प्राचीनप्रसिद्धिः। इह तु सीमाशिलामात्रस्य लोकसिद्धत्वेऽप्युक्तविशेषणविशिष्टत्वेन रूपेण कविनैव कल्पितत्वात्। न चास्यास्सीमाविभागो न फलमित्यफले फलत्वकल्पना फलोत्प्रेक्षा किं न स्यादिति वाच्यम्। रोमावल्यास्सीमाशिलात्वसिद्धिमन्तरा तस्याः फलजिज्ञासानुदयेन तत्फलत्वेन सीमाविवादशमनस्योत्प्रेक्षणीयत्वासंभवात्। सोमावतंस इति विशेष्यवाचकस्य पूर्वोक्ततापहरणक्षमत्वाभिप्रायगर्भतया परिकराङ्कुरेण तथा प्रतिपादं द्वितीयवर्णस्य मकारस्यावृत्त्या वृत्त्यनुप्रासरूपशब्दालङ्कारेण तिलतण्डुलन्यायेन मेलनात्संसृष्टिः। शब्दार्थालङ्कारयोरेकशब्दोपात्तत्वेनैकवाचकानुप्रवेशलक्षणस्सङ्कर इति केचित्। पर्यायासहिष्णुपदविन्यास एव तथाविधस्सङ्करो नान्यत्रेति तु परमार्थः। इहैकाक्षरानुवृत्तावपि स्थानविन्यासनैयत्यस्य विदग्धकृतित्वेन छेकानुप्रास एवेत्यपरे। एवं भगवद्विषये मङ्गले निष्पन्ने अर्धनारीश्वरधर्मेण तन्नामकस्य स्वगुरोरप्यनुस्मरणाद्गुरुसञ्चिन्तनरूपमङ्गलान्तरमप्यनुनिष्पन्नं भवति। अस्मिन्सर्गे प्रायेणेन्द्रवज्रावृत्तम्। "स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति लक्षणात्। क्वचिच्च "उपेन्द्रवज्राजतजास्ततो गौ" इत्युक्तलक्षणोपेन्द्रवज्रा। क्वचिच्च द्वयोरनयोर्मेळने "अनन्तरोदीरितलक्ष्मभाजः पादा यदीया उपजातयस्ताः" इत्युक्तलक्षणोपजातिवृत्तमपि संभवति।

अत्र यद्यपि प्राथमिकपद्यादौ नभोदेवताकशून्यत्वफलकस्तगणो न प्रयोगमर्हति । तदुक्तं—"वर्णं गणं च काव्यस्य मुखे कुर्यात्तु शोभनम्" इति तथाप्यादौ वकारस्यामृतबीजस्य भद्रवाचकस्य सन्निवेशात् तथाविधस्यापि तगणस्य मध्ये लक्ष्मीवाचकमाशब्दघटितत्वात्तस्य च पादचतुष्टये तुल्यतया सन्निवेशाच्च गणप्रयुक्तो दोषो न सम्भवतीति हृदयं वेदितव्यम् । तदुक्तं "स्वेष्टदेवादिमन्त्रे वा बीजे वा मङ्गलार्थके । प्रबन्धादौ प्रयुक्ते तु गणदोषो न विद्यते" इति ॥ अन्यत्रापि "देवतावाचकाश्शब्दा ये स्युर्भद्रादिवाचकाः । ते सर्वे नैव दुष्यन्ति [गणतो] वर्णतोऽपि वा" इति । अत एव कालिदासकृतौ कुमारसम्भवे—अस्त्युत्तरस्यामिति; भोजराजकृतौ चम्पूरामायणे लक्ष्मीं तनोत्वित्यादिपद्येषु शून्यत्वफलकस्य तगणस्य; तथा माघकाव्ये—श्रियः पतिरिति; भारविकृते किरातार्जुनीये —[1]श्रियः कुरूणामिति सूर्यदेवताकस्य रोगफलकजगणस्य च प्रयोग इत्यादिः प्राचीनानां प्रयोगोऽपि साधु सङ्गच्छते ॥ १ ॥

इत्थं ईश्वरप्रार्थनानन्तरं लोके क्वचित्कृतेऽपि मङ्गले निर्विघ्नपरिसमाप्त्यदर्शनेन विघ्नबाहुळ्यस्यैव तन्निमित्तत्वावश्यंभावेन तथाविधविघ्नसन्देहेनाथ च "ग्रन्थादौ स्वे [ष्टदैवं] च गुरूनपि कवीनपि । पूर्विकान् स्वं च राजानं देशं कालं च कीर्तयेत्" इत्यभियुक्तसमाचरणेन तथाविधमेव बहुविधमङ्गळमाचरन्नादौ मनोवाक्कायकृतसर्वपापनिवर्तकं श्रीरामनाम्ना कृतावतारं भगवन्तं परमपुरुषं प्रार्थयते—

**यः स्थाणुना केवलमाततज्यं तन्वन्क्षणाद्धन्ववरं सभङ्गम् ।**
**सीताशुभाङ्कूरसमृद्धिमाधाद्भूत्यै स भूयान्महिमाघनश्रीः ॥२॥**

**य इति ॥** घनस्य सजलजलदस्येव श्रीः शोभा यस्य तादृशः नीलमेघश्यामल इत्यर्थः । तेन घनसमानशीलत्वमपि व्यज्यते । अन्यत्र घना-निरन्तरा अपरिक्षीयमाणेति भावः; श्रीः संपत् येन तादृशः । महिमनामकसिद्धौ सम्प्राप्तायां सर्वासामपि संपदां परिपूर्णत्वसम्भवादिति भावः । यो वक्ष्यमाण-

[1] The manuscript reads रविकृतस्य.

गुणोपलक्षितो महिमा भूमा भगवतो विष्णोस्तेजोमय इति भावः। अणिमाद्यष्टभूतिष्वन्यतमा महिमाख्या भूतिरित्यर्थः। वनश्रीरिति रूपसाम्यमुक्त्वा शीलसाम्यमपि श्लेषभङ्ग्याभिधत्ते। स्थाणुना केवलं परमेश्वरमात्रेण। आतता आरोपिता ज्या मौर्वी यस्मिन्। शिवातिरिक्तेन केनाप्यारोपयितुमशक्यमिति भावः। तेनातिदृढत्वं व्यज्यते। मेघपक्षे, स्थाणुना केवलं शाखादिशून्येन स्कन्धावशेषेग वृक्षमात्रेग। जातावेकवचनम्। ईदृशवृक्षत्वजातिमात्रेणेत्यर्थः। तेन लतागुल्मादिशून्यत्वप्रतीत्या अतिचिरपरिचितानावृष्टिदूषितत्वं व्यज्यते। आतता व्याप्ता ज्या भूमिर्यत्रेत्यर्थः। "स्थाणू रुद्र उमापतिः" "स्थाणुरस्त्री ध्रुवश्शङ्कुः" "मौर्वी ज्या शिञ्जिनी" "क्षोणी ज्या काश्यपी क्षितिः" इति चामरः। धन्ववरं चापवरं मरुदेशं च। "धनुश्चापौ धन्व" "समानौ मरुधन्वानौ" इति चामरः। क्षणात् क्षणकालमात्रेण। तेन विलम्बानपेक्षत्वम्, तेन क्लेशाभावः, तेन च महासत्त्वगुणत्वं च व्यज्यते। सभङ्गं भङ्गेन छेदेन सहितम् त्रुटितमिति यावत्। अन्यत्र भङ्गैस्तरङ्गैस्सहितम्। तन्वन् कुर्वन्सन् सीतायाः जानक्याः शुभाङ्कूराणां मङ्गलोदयानाम् समृद्धिं पूर्तिम्। आधात् अकरोत्। शिवधनुर्भङ्गेन निरतिशयं निजशौर्यं प्रपञ्चयित्वा वीर्यशुल्कां सीतामुपयेम इति भावः। यतो नारीणां परिणयमूला एव सर्वास्संपद इति भावः। अन्यत्र सीतायां लाङ्गलमार्गे। "सीता लाङ्गलपद्धतिः" इत्यमरः। शुभानां क्षेमङ्कराणाम् अङ्कूराणां सस्यप्रोहाणाम्[1] समृद्धिं पूर्तिम्। आधात्। आङ्पूर्वात् "डुधाञ्धारणपोषणयोः" इति धातोर्लुङ्। निरन्तरधारासेचनेन मरुदोषमपोह्य सकलसस्यपरिपूर्णमतानीदिति भावः। यत्तदोर्नित्यसम्बन्धात् स इत्यध्याह्रियते। स उक्तविशेषणविशिष्टः श्रीरामः। भूत्यै संपदे सर्वविधसम्पत्त्यै। भूयात् सर्वाभीष्टप्रदोऽस्त्विति भावः। महिमाख्यनिधिः सर्वसिद्धिं दद्यादिति च व्यज्यते। अत्र घनश्रीरिति वाचकलुप्तोपमा। सा च श्लेषसंपादितसमानधर्मेति श्लेषसङ्कीर्णा। क्षणमात्रेण तरङ्गितत्वस्य तन्वन्निति शतृप्रत्ययलब्धसभङ्गीकरणतुल्यकालमङ्कुरसमृद्ध्याधानस्य चायोगेऽपि योगवर्णनारूपातिशयोक्तिगर्भिता। प्राचीनाः खलु सङ्करस्त्रिविध इत्याचख्युः अङ्गाङ्गितासन्देहपदोदितत्वभिदया। केचित् समत्वादप्यङ्गाङ्गित्वमनेकधा

[1] The manuscript wrongly reads शस्प्रोहाणाम्.

परिगणय्य [आहुः] । वाचातीतमतो मतो मदुदितोऽप्यर्थः सतां साम्प्रतम् । महिमाख्येति विशेषप्रार्थनाभिव्यक्ता ध्वनिः ॥ २ ॥

अथ विष्णुमायामय्या जगज्जनन्या लक्ष्म्या अवताररूपां जानकीं प्रसङ्गात्प्रार्थयति—

**जयाय भूयाज्जनकात्मजा सा कुचेन कूलङ्कषगौरवेण ।**
**पतिव्रतौचित्यपरा पुरारिशरासगर्वं समकोचयद्या ॥ ३ ॥**

जयायेति—या वक्ष्यमाणलक्षणा जनकात्मजा जानकी । पत्युः नायकस्य व्रतमेव व्रतं यासां तादृशीनां स्वनायकानुष्ठितमेव व्रतं स्वयमनुतिष्ठन्तीनामित्यर्थः । तासां यत् औचित्यं उचितकर्मानुष्ठानमित्यर्थः तस्मिन् परा जागरूका सती स्वनाथेन श्रीरामचन्द्रेणानुष्ठितमेव स्वयमपि कुर्वाणा सतीत्यर्थः । कूलङ्कषं परिपूर्णम् गौरवं पृथुत्वं यस्य तादृशेन कुचेन स्तनेन साधनेन । पुरारिशरासस्य सुमेरोः । त्रिपुरसंहारावसरे महामेरोः शिवचापत्वादिति भावः गर्वं मत्तो गुरुतरः कोऽपि नास्तीत्यभिमानम् समकोचयत् व्यपोहयत । संपूर्वात् "कुच शब्दे तारे" इति धातोः सङ्कोचार्थाण्णिजन्ताल्लुङ् । ततोऽप्यस्यातिपृथुतया तद्दर्शनमात्रेण मेरुः स्वाभिमानमत्यजदिति भावः । जनकसदसि श्रीरामभद्रेण स्पर्शमात्रेण शिवधनुषि भग्ने तस्य महासारत्वदुरारोपत्वादिकृतगर्वभङ्गस्य कृतत्वेन तादृशेन भर्त्रा समाचरितमेव स्वयमनुष्ठातुं शिवधनुर्गर्वसङ्कोचमुक्तविधया स्वयमप्यकरोत्किमिति भावः । सा एवं पातिव्रत्यपरिपालनधुरंधरा जानकी । जयाय विजयाय सङ्कल्पितसकलार्थलाभायेति भावः । भूयात् स्यात् । अत्र कविकल्पिते सीताकृतहरधनुर्गर्वसङ्कोचे स्वभर्तृकृतकर्मानुष्ठानपरत्वं न हेतुरिति तस्य तद्धेतुत्वप्रतिपादनेनासिद्धविषया हेतूत्प्रेक्षा व्यञ्जकाभावाद्गूढा । कूलङ्कषगौरवेणेति साभिप्रायविशेषणविन्यासात्परिकरसङ्कीर्णा ॥ ३ ॥

अथ बालकृष्णमधिकृत्य श्रेयः प्रार्थयति—

**मुधा रुदन्गर्भगृहे[1] समेतामादातुमालिङ्ग्य हठेन राधाम् ।**
**कुर्वन्नखाङ्कान्कुचयोरमुष्या मायाशिशुर्मङ्गलमातनोतु ॥ ४ ॥**

[1] G. manuscript reads मुग्धारुदद्गर्भगृहे etc.

मुधेति–गर्भगृहे वासभूमौ। "गर्भागारं वासगृहं" इत्यमरः। मुधा व्याजेन। रुदन् विलपन् सन्। वस्तुतः शोकातीतस्य विलापनिमित्ताभावेऽपि स्वावलम्बितशिशुवेषसमर्थनाय कपटरोदनं राधासमागमसङ्केतभूतमाचरन्निति भावः। तथा आदातुं गृहीतुम्। समेतां प्राप्ताम्। रुदन्तमुपगृह्य समाश्वासयन्तीमित्यर्थः। रोदनाख्यसङ्केतं विदित्वा सत्वरमागत्य कराभ्यामुपगृहीतवतीमिति भावः। राधां गोपिकाम्। हठेन बलात्कारेण। औत्सुक्येनेति भावः। आलिङ्ग्य परिष्वज्य। अमुष्या राधायाः। कुचयोः स्तनयोः। नखाङ्कान् नखरविलेखनानि। कुर्वन् तन्वंश्च। मायाशिशुः मायया कपटेन शिशुः मायापरिगृहीतशिशुवेषः। उक्तविधया स्वाभिमतराधासङ्गलोलोऽपि प्रेयसीसमाह्वानतदाश्लेषणतत्कुचमर्दनानि सर्वलोकप्रत्यक्षमनुतिष्ठन्नपि सर्वस्यापि स्वचेष्टितस्य शिशुसाधारण्यसंपादनपूर्वकं शिशुचरितेन स्वाचरितविटचरितमपलपन्निति भावः। मङ्गलं शुभम्। सर्वाभीष्टोपलक्षकमिदम्। आतनोतु विस्तारीकरोतु। आङ्पूर्वात् "तनु विस्तारे" इति धातोर्लोट्। अत्र मायाशिशुरिति शिशुत्वस्य मिथ्यात्वप्रतीत्या स्ववशमायत्वप्रतीत्या च जगदीशत्वेन स्वाभीष्टवितरणसमर्थत्वाभिव्यक्त्या च साभिप्रायविशेष्यकत्वात्परिकराङ्कुरालङ्कारः। तस्य सन्नन्तविशेषणाभ्यां समर्थनाद्वाक्यार्थहेतुककाव्यलिङ्गेन बालस्वभाववर्णनरूपस्वभावोक्त्या च सङ्करः। नन्वत्र "लटः शतृशानचावप्रथमासमानाधिकरणे" इति सूत्रेण मायाशिशुसामानाधिकरण्ये शतृप्रत्ययाप्रवृत्त्या क्रियान्वयस्य वक्तव्यत्वेऽपि मङ्गलाचरणक्रियायां रोदनस्य कुचयोर्नखाङ्काचरणस्य चान्वयानुपपत्तिः। न च प्रथमासमानाधिकरणेऽपि क्वचिद्भवतीत्युक्त्या "सन् देवदत्तः" इत्यप्युदाहृतमेवेति वाच्यम्। गुणक्रियावाचकादेव शतृशानचोर्निषेधः। न पुनर्द्रव्यजातिवाचकादित्यत्रैव तत्तात्पर्यादिति चेत्सत्यम्। मायाशिशुरित्यस्य मायया शिशुत्वमभिनयन्नित्यर्थस्यैव विवक्षया तदभिनयाचरणक्रियान्वयाभ्युपगमेनानुपपत्त्यभावादित्यलं पल्लवितेन ॥ ४ ॥

अथ सकलान्तरायसन्तमसमार्ताण्डं वेतण्डाननं विनायकमभिष्टौति—

**रदाग्रसञ्चूर्णितरत्नसानुरजोभरैरङ्कजुषो रमण्याः।**
**सीमन्तसीमान्तरमादधानस्सिन्दूरितं दीव्यति सिन्धुरेन्द्रः[1] ॥ ५ ॥**

[1] G. reads सिन्धुरेन्दुः।

**रदेति**—सिन्धुरेन्द्रो गजश्रेष्ठो विनायक इति यावत्। गजवदनत्वेन सर्वोन्नतत्वाच्च सिन्धुरत्वोपचारः। रदाग्रेण दशनाञ्चलेन संचूर्णितस्य मसृणिततयोद्घृष्टस्य रत्नसानोः सुमेरोः मेरुस्थितपद्मरागमणीनामिति भावः। "रत्नसानुस्सुरालयः" इत्यमरः। रजसां परागाणाम् भरैः पुञ्जैः। केवललौहित्यसारात्सिन्दूराद्वर्णतश्चाकचक्येन चातिशयितैरिति भावः। अङ्कजुषः स्वोत्सङ्गाधिष्ठिताया इत्यर्थः। रमण्याः प्रियायाः, वल्लभाख्याया इति भावः। सीमन्तसीमायाः अलकावधिदेशस्य अन्तरं अवकाशम्। "अन्तरमवकाशावधिपरिमाणे" इति केशवः। सीमन्त इति शकन्ध्वादित्वात्पररूपम्। ललाटान्तमध्यदेश इति यावत्। सिन्दूरितं असिन्दूरं सिन्दूरं सम्पद्यमानं काश्मीराङ्कितमित्यर्थः। आदधानः कुर्वन् सन्। आङ्पूर्वाद्दधातेः कर्तरि आत्मनेपदे शानच्। दीव्यति विहरति। अनितरसुलभातिशयितालङ्कारेणाधिकप्रीतिमुत्पादयन्विलसतीति भावः। वल्लभागणपतेरेव क्षिप्रप्रसादन इति नाम्ना शीघ्रवरप्रदातृत्वस्य सर्वसंप्रतिपन्नतया तथात्वेनेह सङ्कीर्तनमिति भावः। अत्र सिन्दूरीकरणस्वरूपयोग्यत्वाभिप्रायगर्भस्य रत्नसानुपदस्य विशेष्यवाचकस्य सन्निवेशात्परिकराङ्कुरालङ्कारः। न चात्र रत्नसानो रजोभरांशे विशेषणत्वात्परिकर एवेति वाच्यम्। "साभिप्राये विशेषणे" इति परिकरलक्षणे विशेषणपदस्याभेदरूपसामानाधिकरण्येन क्वचिज्जात्यादिवाचकपदान्वयिन एव प्रतिपादनात्। इह तु सम्बन्धसामान्यपरषष्ठीतत्पुरुषाश्रयणाद्रजोभरांशे उक्तविधया विशेषणत्वाभावेन तस्य स्वतो गुणवाचकत्वेऽपि जात्यादिवाचकपदान्तरासान्निध्यात्स्वतन्त्रतया विशेष्यवाचकत्वस्यैव निराबाधत्वादित्यलं विस्तरेण। उदात्तालङ्कारः। परिकराङ्कुरेण संसृष्टिरित्यन्ये ॥ ५ ॥

अथ स्वप्रारिप्सितप्रबन्धस्य विद्याप्रपञ्चरूपतया निखिलविद्यालम्बनभूतसरस्वतीप्रसादसापेक्षतां निश्चित्य तस्याः प्रसादमाशासानस्तदारचितनिजभक्तजनानुग्रहप्रतिपादनपुरस्सरं भूमौ भारत्याः प्रथमावतारसरणिं भगवन्तं वल्मीकजन्मानं मुनिमेवादौ प्रार्थयते—

**उन्मीलयेदुक्तिभरं समग्रं वल्मीकजन्मा कविवल्लभो मे।**
**वाणी सुवृत्ताप्यभिसारिणीव वव्रे यमुल्लङ्घितकाननालिः ॥ ६ ॥**

उन्मीलयेदिति—यं वाल्मीकिम्। वाणी वाङ्मया सरस्वती। सुवृत्ता शोभनवसन्ततिलकादिवृत्तशालिनी। अन्यत्र सुचरित्रापि। अभिसारिणीव पुंश्चलीव। "कान्ताभिसरणोद्युक्ता स्मरार्ता साभिसारिका" इत्यमरः[1]। लक्षणेत्यर्थः (?)। तद्व्यापारमेवाह। उल्लङ्घिवता अतिक्रान्ता त्यक्तेति यावत् कस्य ब्रह्मणः आननानां वदनानां आळिः पङ्क्तिः मुखचतुष्टयमित्यर्थः यया तादृशी सती। वाल्मीकेः पूर्वं क्वापि छन्दोरूपाया भारत्याः प्रसरश्चतुर्मुखमुखावलिमन्तरा नाभूदिति भावः। अन्यत्र उल्लङ्घिवता अतिक्रान्ता काननानां वनानां आळिर्यया तादृशी सती। क्वचित्सङ्केतमुद्दिश्य रहोगमनशीलाया विविक्तवनमार्गाश्रयणस्य सुप्रसिद्धत्वादिति भावः। वव्रे वृतवती समाश्रितवती स्वयमेवानुग्रहवतीत्यर्थः। विद्याप्राप्तिहेतुभूतगुरूपासनतदुपदेशग्रहणतदभ्यासादिश्रमक्लेशं विनैव निखिलविद्याशेवधिरभूदिति भावः। अत्र सुवृत्तेति कथनात् यथा कुलाङ्गनापि निरतिशयलावण्यनिधिं कमपि युवानमालोक्य निजभर्तारं मनसापि तदितराननुसन्धानादिकं निखिलं निजचरित्रञ्चातिलङ्घ्य कामपारवश्येनान्यमाश्रयति तद्वदित्युक्त्या वाल्मीकौ वेधसोऽप्याधिक्ये वक्तव्ये "भारत्याः सुन्दरः सुधीः" इत्यभियुक्तोक्त्या ब्रह्मातिशायिप्रज्ञाप्रागल्भ्यं वाल्मीकौ प्रतीयत इति व्यतिरेकालङ्कारो व्यज्यते। वल्मीकात् वामलूरोः। "वामलूरुश्च नाकुश्च वल्मीकं" इत्यमरः। जन्म उत्पत्तिः निष्क्रमणमिति भावः। अयमेव कविः पुरा व्याधरूपेण वने प्राणिहिंसां कुर्वाणस्सप्तर्षीणामनुग्रहेण श्रीराममन्त्रमपक्रममुपसंगृह्य तमेवावर्तयन् यथाक्रमतामापाद्यमानेन तेन राममन्त्रेण भगवन्तमनुसन्दधानो भक्तिपारवश्येनाचञ्चलतया तपसि स्थितश्चिरात्परितः प्रसर्पद्वल्मीकसन्तानतिरोहिताकृतिर्बहोः कालात्पुनरासेदुषां महर्षीणामनुग्रहेण महर्षित्वमाससादेति कथात्रानुसन्धेया। तादृशो वल्मीकजन्मा। मे मम। समग्रं सकलम्। उक्तिभरं वाग्जालम्। उन्मीलयेत् विकासयेत्। उत्पूर्वात् "मील निमीलने" इति णिजन्ताद्धातोर्विधिलिङ्। अत्र विकासः प्रसिद्धिः वाल्मीकेरनुग्रहलभ्येति भावः। ततश्च या भारतीं

[1] The quotation under reference does not occur in the Amarakosa. The definition of अभिसारिका given there is:—कान्तार्थिनी तु या याति सङ्केतं साभिसारिका। The extract given in the commentary occurs in the Pratāparudrīya.

वल्मीकजन्मानं निरतिशयप्रतिभाप्रतिपादनेन निखिलकविकुलसार्वभौममाकलय्य तदारचितमपि रामायणमप्यखिलोपलालनीयं अतानीत् सैषा ममापि मनीषाविशेषविश्राणनेनानुग्रहमारचय्य मदीयमपीदं काव्यं सर्वोपादेयमातनोत्विति प्रार्थनाभिव्यज्यते । अत्र भारत्या अभिसारिणीसाम्यवर्णनादुपमा । सा च सच्चरित्राप्यभिसारिणीवेति विरोधस्य छन्दश्शास्त्रीयवृत्तपरतया परिहाराद्विरोधाभासेन, काननाळिरिति सुवृत्तेति च सभङ्गाभङ्गश्लेषाभ्यां चानुविद्धेति सङ्करः ॥६॥

अथ मूर्तित्रयवेदत्रयस्वरत्रयव्याहृतित्रयलोकत्रयतेजस्त्रयाग्नित्रयादिवदुत्पत्तिक्रमानुसारात्सर्वलोकप्रसिद्धानां रामायणभारतभागवतानां महाप्रबन्धानामन्यतमस्य कर्तुः संस्मृताववसरसङ्गत्यानुपदबुध्यारूढस्य भगवन्नारायणांशस्य व्यासस्य स्वरूपतः प्रतिपादनं महासाहसं मन्वानस्तदीयां महाभारताख्यां भारतीमनुसन्धत्ते—

**उत्तालशब्दोचितचारुपादन्यासा विचित्राभिनयव्यवस्था ।**
**वैयासिकी भारतवासनाढ्या सरस्वती[1] दीव्यति लासिकेव ॥७॥**

उत्तालेति—उत्तालानां गम्भीराणां शब्दानाम् । उचितः अनुरूपः । अत एव चारुः रमणीयः । तत्तद्रसानुगुणयोः प्रयोगादास्वादनीय इति भावः । पादानां पद्यचरणानाम् न्यासो विन्यसनं यस्यां सा । अन्यत्र उत् उद्गतानाम् उदितानामिति यावत् । अभिनेयतत्तद्विशेषद्योतकतया प्रपञ्चितानामिति भावः । ताळशब्दानां कांस्यवाद्यध्वनीनाम् उचिताः तदानुगुण्येन प्रपञ्चिताः अत एव चारवः अवैषम्यादतिमनोहराः पादन्यासाः चरणविक्षेपा यस्यास्तादृशी । तथा विचित्राः विस्मयनीयाः अभिनयस्य तत्तदुपाख्यानस्य व्यवस्थाः विन्यसनानि यस्याम् । अन्यत्र विचित्राणां नानाविधानां शृङ्गारादिरसाभिव्यञ्जकतया सात्त्विकाङ्गिकाद्यनेकभेदवतां अभिनयानां अनुकरणानां व्यवस्था विवेचनं यस्यां तादृशी । यद्वा विचित्रा प्रयोक्तृचातुर्यानुरोधादत्याश्चर्यकारिणी अभिनयानां व्यवस्थेति पूर्ववत् । तथा भारतानां भरतवंशजानां युधिष्ठिरादीनां

[1] सा भारती is another reading.

वासनया चरितेन आढ्या पूर्णा। विशेषात्तच्चरितप्रतिपादिकेति भावः। अन्यत्र भारतया भरततन्त्रविषयिण्या वासनया बहुतराभ्यासदृढीकृतसंस्कारेण आढ्या अन्तरिता। लासिकी नर्तकीव। दीव्यति प्रकाशते। द्योतनार्थकाद्दीव्यतेः कर्तरि लट्। सकलजगद्विख्याता भवतीति भावः। उपमालङ्कारः श्लेषानुप्राणित इति सङ्करः। अत्र चतुर्थपादे उपेन्द्रवज्रालक्षणादुपजातिवृत्तम्। अन्ये तु सा भारती दीव्यतीति पाठमाहुः॥ ७॥

अथ पूर्वोक्तक्रमानुरोधेन परमभागवतस्याजन्मब्रह्मनिष्ठस्य शुकस्य वाणीमभिष्टौति—

**अनन्तशाखागमपक्षपातजुषः प्रकृत्या हरितत्त्वभाजः।**
**शुकस्य वाणी सुकृतैकलभ्या न कस्य वानन्दभरं विधत्ते॥ ८॥**

**अनन्तेति**—अनन्ताः बह्वयः शाश्वता वा शाखाः काठकादयः येषां तेषु आगमेषु पक्षपातं विश्वासं अवैदिकेषु जिहासां चेति भावः। जुषति प्राप्नोतीति तादृशस्य। अन्यत्र अनन्ताः अपरिमेयाः शाखाः विटपा येषां तेषु आगमेषु वृक्षेषु पक्षाभ्यां छदाभ्यां पातं प्राप्तिं जुषतीति तादृशस्य। प्रकृत्या स्वभावेन जन्मनैवेत्यर्थः। हरेः पुरुषोत्तमस्य तत्त्वं स्वरूपम् भजति अवगच्छतीति तादृशस्य गुरूपसर्पणादिकमन्तरा स्वतःसंपन्नब्रह्मज्ञानस्येति भावः। अन्यत्र प्रकृत्या जातिस्वभावात्। हरितत्वं श्यामवर्णत्वम् भजतः। शुकस्य-शुकाख्यब्रह्मर्षेः कीरस्य च। सुकृतेन पुण्येन एकेन केवलेन लभ्या प्राप्या। पुण्यवतां सुलभा पापिनामलभ्येत्यर्थः। अनेकजन्मसंपादितसुचरितपरिपाकेनैव भागवतपरिशीलनप्रवृत्तिर्भवतीति भावः। अन्यत्र सुकृतेन शुकस्यैव पूर्वकृतपुण्यविशेषजनितवासनावशेनेति भावः। लभ्या प्राप्या। अकृतसुकृतानां कीराणां वचनरचनाभावस्य दृष्टचरत्वादिति भावः। यद्वा सुष्ठु कृतं करणं शिक्षाविशेषः तेनैकेनैव लभ्या न पुनः स्वच्छन्दवनचारिणामिति भावः। वाणी भागवतरूपा प्राधान्येन भगवच्चरितप्रपञ्चनरूपा कीरवाणी च। कस्य वा आनन्दभरं स्वात्मानन्दाधिगमं ब्रह्मावगतिमिति यावत्। अन्यत्र आनन्दभरं

प्रीत्यतिशयम् । न विधत्ते न कुरुते । सर्वेषामानन्दाधिगमो दृश्यत एवेति भावः । अत्र विशेष्यविशेषणैस्सर्वैरप्यप्रकृतशुकवृत्तान्तप्रतीत्या प्रकृताप्रकृतश्लेषो ध्वनिरित्यन्ये । उपेन्द्रवज्रावृत्तम् ॥ ८ ॥

एवमपरिमेयमहिमातिशयान्महर्षींस्तदुपन्यस्तनिखिलश्रुतिशिरस्सारभरितान्महाप्रबन्धांश्चानुसन्धाय सांप्रतं कविकुलतिलकं कालिदासं प्रस्तौति—

**उदञ्चितोच्चावचरागकालीवीटीरसासारविवर्तमूर्तिः ।**
**सितायते सूक्तिरहो यदीया चित्ते स जागर्ति चिरं कवीन्द्रः ॥९॥**

उदञ्चितेति—उदञ्चितः उद्भूतः उच्चावचः नानाविधः क्षणं बिम्बफलतुल्यः क्षणं जपाकुसुमसमः ततश्चेन्द्रकोपोपम इत्येकस्यैव बहुविधत्वात् । रागः लौहित्यं यस्य तादृशस्य कालीवीटीरसासारस्य देवीप्रदिष्टताम्बूलरसधारायाः प्रसादपरवशमातङ्गीमुखकमलविनिर्गत्वरस्य प्रणतप्रह्वीभूतकाळिदासवदनपरिगृहीतस्येति भावः । विवर्ता रूपान्तरात्मिका मूर्तिः वाग्झरीस्वरूपं यस्यास्तादृशी । देवीविश्राणितवीटीरसस्यैव कवितारूपतया परिणतत्वादिति भावः । यदीया काळिदाससम्बन्धिनी । सूक्तिः सरसमधुरा वाणी । सितायते शर्करावदाचरति । सितायते श्वेतीभवतीति च व्यज्यते । सिताशब्दादाचारार्थे क्यङ् । अहो इत्याश्चर्ये । अतिलोहितवीटीरसमूर्तेर्धवलीभवनमद्भुतमित्यर्थः । सः कवीन्द्रः काळिदासः । चित्ते हृदये । ममेति शेषः । चिरं जागर्ति सदा प्रतिवसति । सन्ततं तदनुसन्धानपरोऽहमिति भावः । अत्र वीटीसमर्पणसमनन्तरमेव कालिदासमुखादतिमधुरतरकवितामृतोद्गिरणेन निमित्तेन वीटीरस एव साहितीविवर्तोपादानतयाध्यवसीयते । स च वीटीरस एव अल्पपात्रपरिपूरितबहूदकप्रत्यावर्तनवद्वाग्झरीरूपेण प्रावर्ततेति वीटीरसाभेदसंभावनारूपोत्प्रेक्षानुप्राणितोऽतिलोहितस्य धवलीभवनरूपविरोधस्य शर्करायत इत्याभासीकरणरूपो विरोधाभासः । स च शर्करावदाचरतीत्युपमासापेक्षेति सङ्करः । अत्रेन्द्रवज्रोपेन्द्रवज्रयोः प्रस्ताराव्यवहितयोर्मेळनादुपजातिवृत्तम् । एवमन्यत्राप्यूह्यम् ॥ ९ ॥

अथ काळिदाससूक्तेश्शर्करात्वेन वर्णनमयुक्तमित्यभिप्रायवानाह—

**काळीमुखोद्यद्धनसारवीटीसौरभ्यसौलभ्यजुषा यदुक्त्या ।**
**सितासिताजायत लज्जितेव स काळिदासः स्तुतिगोचरः किम् ॥**

काळीति—सिता शर्करा । काळ्याः गौर्याः मुखात् वदनात् उद्यन्त्याः आविर्भवन्त्याः घनसारवीट्याः कर्पूरमिश्रितताम्बूलस्य सौरभ्यस्य परिमळस्य सौलभ्यं अप्रयासोपलब्धिम् जुषति प्राप्नोतीति तादृश्या । यदुक्त्या कालिदासवाण्या निमित्तभूतया । लज्जितेव ह्रीणेव । सिता धवळा । अजायत । उत्कृष्टत्वेन प्रख्यातस्य स्वापेक्षयात्युत्कृष्टस्य संभवे 'सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते' इति न्यायाल्लज्जया धवलीभावस्य प्रसिद्धत्वादिति भावः । अन्यथा माधुर्यवतां मकरन्दादीनामिव पाटलवर्णत्वं कुतो न स्यादित्याशयः । स एवं परदेवताप्रसादसमासादितसर्वातिशायिवाङ्माधुरीकः काळिदासः । स्तुतेः स्तवस्य । किं गोचरः विषयः किमु ? अविषय एवेत्यर्थः । तदीया गुणास्सामस्त्येन केनापि वक्तुमशक्या एवेति भावः । अत्र स्वाभाविकशर्कराधावळ्ये लज्जाहेतुत्वसम्भावना हेतूत्प्रेक्षा । वस्तुतो लज्जाभावादसिद्धविषया । इत्थं च कालिदासवाक् शर्करातिशायितया तादृूप्यवर्णनमयुक्तमिति भावः ॥ ततश्च मिळितयोः पद्ययोराक्षेपालङ्कारः ॥ १० ॥

अथ भवभूतिं प्रार्थयते—

**यो मालतीमाधवयोगहृद्यः प्रायो रसालोचितभव्यपद्यः ।**
**आरामदेशः कवितालतानामामोददोऽयं भवभूतिरस्तु ॥ ११ ॥**

**य इति**—यः भवभूतिः । मालती नाम काचन नायिका माधवो नाम तन्नायकः तयोर्योगः परिणयः तेन हृद्यः रमणीयः । "हृदयस्य प्रियः" इत्यनेन यत्प्रत्ययः । मालतीमाधवीयाख्यप्रकरणरूपकाचरणेन सकलसहृदयहृदयानन्दजनक इति भावः । अन्यत्र मालती वासन्ती लता माधवो वसन्तः तयोर्योगेन मेळनेन हृद्यः मनोहरः । तथा प्रायः प्रायेण । रसैः शृङ्गारादिभिः

आलोचितानि हृदयानन्दितयानुभाव्यमानानि । भव्यानि कुशलानि "भव्यगेय" इत्यादिना कर्तरि यत्प्रत्ययः । अर्थतः शब्दतश्चात्यन्तमधुराणीति भावः । पद्यानि श्लोका यस्य तादृशः । "पदान्यत्र दृश्यन्ते" इति यत्प्रत्ययः । अत्र एकैकस्मिन्नेव सर्वेषां रसानामस्फुरणात्कचिद्रूपस्फुरणाद्वा प्राय इति । अन्यत्र प्रायो रसालैः चूतैः "आम्रश्चूतो रसाल" इत्यमरः उचितया अनुरूपया योजिता भव्या मनोज्ञा प्रच्छायशीतलत्वेन मृदुशाद्वलसिकतिलत्वादिना सुखसञ्चरणक्षमेति भावः । पद्या सरणिर्यस्मिन् तादृशः । रसाला एव उद्याने भूयसा मार्गवर्तिनो भवन्तीति भावः । कविता साहित्यः ता एव लतास्तासामारामदेशः उद्यानभूमिः भवतीति शेषः । अयं ईदृशो भवभूतिः भवभूतिनामा कविः । भवात् ईश्वरात् भूतिः वाग्विभूतिः यस्येति व्युत्पत्त्या महेश्वरानुग्रहलब्धविद्यावैशद्यो वरकविरिति प्रतीयते । तेन पार्वतीपरमेश्वरयोरनुग्रहभाजनीभूतयोर्द्वयोः काळिदासभवभूत्योरव्यवधानेन प्रतिपादनात्परस्परसंश्लिष्टयोरुमामहेश्वरयोरभिव्यक्त्या कवेः तदुभयविषयकरतिभावो व्यज्यते । आमोददः आनन्दातिशयप्रदाता सौरभ्यसंपादकश्च । अस्तु भूयात् । न इति शेषः । अत्र उक्तविशेषणविशिष्टस्य कवेरेवंविधोद्यानत्वरूपणात्समस्तवस्तुविषयकं सावयवं विशिष्टरूपकमलङ्कारः । तेन तथाविधोद्यानस्येव कवेः स्वामोदप्रदातृत्वमनपायमिति व्यज्यते ॥ ११ ॥

अथ माघकविं प्रस्तौति—

**माघाय माघं भवतान्मुकुन्दकेळीकथावर्णनपुण्यभाजे ।**
**स्वर्गावरोधा इव यस्य वाचः स्वैरं भजन्ते सुरसार्थशय्याः ॥ १२ ॥**

माघायेति—यस्य कवेः । वाचः सूक्तयः । स्वर्गावरोधा इव सुरलोकान्तःपुराणीव । सु शोभनाः रसाः शृङ्गारादयः अर्था उत्प्रेक्षागोचराः शय्याः रसानुगुणपदविन्यासरूपाः । अन्यत्र सुराणां इन्द्रादिदेवानां सार्थस्य समूहस्य । "सङ्घसार्थौ तु जन्तुभिः" इत्यमरः । शय्याः पर्यङ्कान् । भजन्ते लभन्ते । प्राप्नुवन्तीत्यर्थात् "भज सेवायां" इति धातोर्लट् । यत्तदोर्नित्यसम्बन्धात्तस्मा इत्यध्याहार्यम् । तादृशाय । अथ च मुकुन्दस्य कृष्णस्य केळीकथायाः विहारचरितस्य वर्णनेन कथनेन शिशुपालवधाख्यमहाकाव्यविरचनेनेति भावः ।

पुण्यं भगवत्कथासङ्कीर्तनसम्पन्नं सुकृतं भजतीति तादृशाय। माघाय माघनाम्ने महाकवये। अघं दुःखं दुरितं वा। "अघं दुरितदुःखयोः" इति विश्वः। मा भवतात् मा भूत्। निषेधार्थकशब्दयुक्तादाशीरर्थाद्भवतेर्लोट्। सर्वदा सुखसमृद्धः सुकृतसन्तानसम्पन्नश्च भूयादित्यर्थः। श्लेषालङ्कारः॥ १२॥

अथ भारविं प्रस्तौति—

**स भारविर्दीव्यति पादबृन्दैर्मन्देहसंमोहनमादधानैः।**
**धनञ्जयस्फूर्तिविधायिभिस्सत्पद्योदितैर्व्यञ्जितभावभेदः॥ १३॥**

**स इति**—सः प्रसिद्धः भारविः भारविर्नाम कविः। अन्यत्र सभाः रविरिति पदच्छेदः। भासा दीप्त्या सहितः सभास्तादृशो रविः सूर्यः। मन्देहानां मन्दबुद्धीनाम्। यद्यपीहाशब्दस्येच्छापरत्वं तथापीच्छाया बुद्धिजन्यत्वात्तत्समानविषयत्वाद्बुद्धावौपचारिकः। यद्वा मन्देहानां मन्दोद्यमानामित्यर्थः। "ईहोद्यमेच्छयाः" इति रत्नमाला। तेषां संमोहनं सम्यगर्थानवबोधम्। आदधानैः विदधानैः। अबुद्धिमतां बुद्धिमतामपि मन्योद्यमानां गूढव्यङ्ग्यतया झटित्यर्थावबोधाजनकैरिति भावः। अन्यत्र मन्देहनाम्नां दानवानाम् संमोहनं सन्तापातिशयजनितां मूर्छामादधानैः। "रक्षांस्यादित्यं योधयन्ति" इत्यादिश्रुतेः। तथा धनञ्जयस्य अर्जुनस्य स्फूर्तिं ख्यातिं विदधतीति तादृशैः। अनेनैव कविना किरातार्जुनीयाख्ये काव्ये धनञ्जययशोविशदीकरणादिति भावः। अन्यत्र धनञ्जयस्य अग्नेः। "वीतिहोत्रो धनञ्जयः" इत्यमरः। स्फूर्तिं रात्रौ विप्रकृतदेशप्रस्फुरणं विदधतीति तादृशैः। "अग्निं वा वादित्यः सायं प्रविशति। तस्मादग्निर्दूरान्नक्तं ददृशे" इति श्रुतेः। तथा सत्पद्योदितैः सत्सु साधुषु अदोषसगुणसालङ्कारत्वादिविशिष्टतया विद्वदुपलालितेष्विति भावः पद्येषु श्लोकेषु उदितैः प्रयोजितैः। पादबृन्दैः पद्यचतुर्थांशकदम्बैः। पादशब्दस्य पदपरत्वमाश्रित्य सुबन्तादिपदजालैरिति वा। अन्यत्र सतां नक्षत्राणां पद्यायां सरणौ गगनमार्ग इत्यर्थः। उदितैः प्रवृत्तैः। पादबृन्दैः रश्मिजालैः। "पादा रश्म्यङ्घ्रितुर्यांशाः" इत्यमरः। व्यञ्जिताः व्यञ्जनाख्यया वृत्त्या ध्वनिताः भावानां रत्यादीनां वस्त्वलङ्काररसादीनां च भेदाः प्रपञ्चाः येन तादृशस्सन्। अन्यत्र

व्यञ्जिताः प्रकाशिताः भावानां द्रव्यादिपदार्थानां भेदाः परस्परवैलक्षण्यं येन तादृशस्सन् । दीव्यति प्रकाशते । चमत्कृतार्थकल्पकत्वेन सकललोकप्रकाशकारितया च सर्वाशंसनीयो भवतीति भावः । प्रकृताप्रकृतश्लेषः ॥ १३ ॥

अथ बाणकविं प्रस्तौति—

**बाणो धुरीणः कविपुङ्गवेषु प्रकाशतां भव्यफलोदयश्रीः ।**
**अमुञ्चमानोऽपि गुणं परेषां विव्याध मर्माणि विशेषतो यः ॥१४॥**

**बाण इति**—कविपुङ्गवेषु कविश्रेष्ठेषु काळिदासादिषु मध्ये । धुरीणः धूर्वहः । "खस्सर्वधुरां" इति केवलादपि खप्रत्ययः । कविकर्मनिर्वाहक इत्यर्थः । अन्यत्र कविपुङ्गवेषु पक्षिवर्येषु । धुरीणः शीघ्रपातादिपक्षवत्कर्मनिर्वाहक इत्यर्थः । "विकविः पतगः पतत्" इति श्रीहर्षः । बाणस्यापि पक्षवत्तया तत्कर्माचरणस्यानपायादिति भावः । अत एव, भव्यफला कुशलप्रयोजनवती उदयस्य उत्पत्तेः श्रीः सम्पत् यस्य समयाचारेण स्वसूक्त्या भगवद्गुणादिवर्णने च जन्मसाफल्यं प्राप्तमिति भावः । अन्यत्र भव्यं रमणीयं फलं काळायसबाणाग्रनिवेशितशल्यम् । "फलमिष्वग्रे सस्ये" इति रत्नमाला । यस्याः भव्यबालायाः उदयस्य मुखप्रदेशस्य श्रीः शोभा यस्य तादृशः । यः बाणकविः सायकश्च । गुणं प्रतिभाप्रवचनादिकम् । अन्यत्र, मौर्वी । "मौर्वी ज्या शिञ्जिनी गुणः" इत्यमरः । अमुञ्चमानः अविजहन्नपि । विशेषतः समधिकतया । परेषां प्रतिभटविबुधानां कवीनां च । मर्माणि न्यक्कारहेतून् दोषान् । विव्याध-बिभेद दोषोद्घाटनादिना परानभ्यभवदिति भावः । अन्यत्र अमुञ्चमानोऽपि अत्यजन्नपि । केवलमौर्व्या सन्धायाप्रयुक्तोपीत्यर्थः । विशेषतः लक्ष्ये प्रयुक्तो यथा शत्रूणां मर्माणि भिन्द्यात्ततोऽधिकतयेति भावः । परेषां शत्रूणाम् । मर्माणि हृदयादिस्थानविशेषान् । विव्याध बिभेद । सः बाणः बाणनामा कविः, सायकश्च । प्रकाशतां दीव्यतु । प्रपूर्वात् काशृदीप्ताविति धातोर्लोट् । अत्र सायकपक्षे मौर्वीसंहितमात्रस्याप्रयुक्तस्यापि बाणस्य विशेषतः परमर्मविदारकत्वविरोधस्य, कविपक्षे निखिलगुणवतः प्रतिवादिमर्मोद्घाटयितृत्वार्थेनाभासीकरणाद्विरोधाभासालङ्कारः ॥

अथ मयूरनामानं कविं प्रशंसति—

**मयूरनामा कविमल्ल एषः चकास्ति सच्चन्द्रकलालिकीर्तिः ।**
**यश्शारदाभ्यागममप्यवाप्य स्फुरत्कलापालि विजृम्भते स्म ॥१५॥**

मयूरेति—यः मयूरकविः बर्ही च । शारदायाः सरस्वत्याः अभ्यागमं समागमम् । अवाप्य लब्ध्वापि । सरस्वतीप्रसादेन सरससाहितीमभ्युपेत्येति भावः । अन्यत्र शरदं शरत्कालसम्बन्धिनं अभ्यागमं समागममवाप्यापि मयूरोत्साहहेतुभूतवर्षासमयव्यपगमे समापतितेऽपीति भावः । सतां नक्षत्राणां चन्द्रकलानां इन्दुखण्डानां च आलिः पङ्क्तिरिव जगद्भासकेति भावः, कीर्तिः प्रशस्तिर्यस्य तादृशस्सन् । अन्यत्र सन्ति विद्यमानानि विस्पष्टपरिदृष्टानीति भावः । चन्द्रकाणि चन्द्रकलाकारचकचक्रबिन्दुजालानि । "समौ चन्द्रकमेचकौ" इत्यमरः । तैः लालिनी लसमाना कीर्तिः बर्हभरः यस्य तादृशः सन् । "बर्हः स्तवेऽपि कीर्तिः स्यात्" इति वामनः । ताण्डवावसरे पक्षोपपक्षप्रसारणेन प्रकटितचन्द्रकतया नृत्यन्निति भावः । स्फुरन्ती प्रकाशमाना कलानां विद्यानां पालिः समूहो यस्मिन् कर्मणि तथा । अन्यत्र स्फुरन्ती विलसन्ती नृत्यावसर-प्रसारितेति भावः । कलापानां मयूरपक्षतीनां आलिः यस्मिन् कर्मणि तया । "कलापो भूषणे बर्हे" इत्यमरः । विजृम्भते स्म विचकाशे । विपूर्वात् "जृभी-गात्रविक्षेपे" इति धातोरात्मनेपदे लट् । स्मयोगाद्भूतार्थता । अन्यत्र ननर्तेत्यर्थः । स इत्यध्याहारः । स एष यथोक्तगुणः, मयूर इति नाम नामधेयं यस्य सः । कविमल्लः कविश्रेष्ठः अन्यत्र पक्षिश्रेष्ठश्च । चकास्ति भासते । "काश्रृ दीप्तौ" इति धातोर्लट् । अत्र मयूराणां वर्षास्वेव प्रमदातिशयस्य प्रत्युत शरदि खेदस्य कविलोकप्रसिद्धावपि शरदि मयूरविजृम्भणरूपविरोधस्य कविपक्षे सारस्व[त]-समागमसम्पन्नस्य निखिलविद्याविलासवत्तया प्रकाशनरूपार्थेनाभासीकरणाद्विरोधा-भासालङ्कारः । कविपक्षे उपमानुप्राणितः ॥ १९ ॥

अथ क्षेमेन्द्रकविं प्रस्तौति—

**क्षेमेन्द्रनाम्ने कविपुङ्गवाय[1] क्षेमाणि भूयासुरलं यदीया[2] ।**
**कवित्वधारा करमाददाना मन्दं विधत्ते मकरन्दमद्धा ॥ १६ ॥**

[1] G. कविवल्लभाय. [2] G. यदीयाः.

क्षेमेन्द्रेति—यदीया क्षेमेन्द्रकविसम्बन्धिनी तत्प्रणीतेत्यर्थः। कवित्वधारा साहित्यधोरणी। धारात्वरूपणाद्रसमयीति व्यज्यते। करं करपदम्, "स्वं रूपं शब्दस्य" इत्यनुशासनात्। मधुवाक् मकरन्दपदावयवीभूतं ककाररेफात्मकं पदमिति भावः। तदेव करं राजदेयबलिविशेषम्। "राजदेयबलौ करः" इति विश्वः। आददाना गृह्णती सती। मकरन्दं मधु। अलं अत्यन्तम्। मन्दं मकरन्दपदे उक्तविधया व्यपगतकरपदावशिष्टमन्दपदवाच्यतया अत्यल्पमाधुर्यं विधत्ते विदधाति। [अद्धा] ध्रुवं सत्यम्। क्षेमेन्द्रकवितारसास्वादात्पूर्वं अतिमधुरत्वेन मकरन्दमनुभूतवतामेव सहृदयानां तत्कवितास्वादसमनन्तरमेव क्षौद्ररसेऽत्यल्पत्वबुध्युदयेन निमित्तेन सकलमधुरवस्तुजातविजेत्र्या क्षेमेन्द्रकवित्वधारया पराजितमकरन्दसकाशात् तदीयसारे तन्नामान्तरावयवीभूतकरपदे श्लेषेण राजदेयबलित्वेनाध्यवसिते बलिरूपेणापहृते परिशिष्टमन्दपदवाच्यतदर्थानुरोधाच्च मन्दपदवाच्योऽभूत्किमिति भावः। तस्मा इत्यध्याहार्यम्। तस्मै क्षेमेन्द्र इति नाम यस्य तादृशाय। क्षेमाणि कुशलानि। भूयासुः भवतेराशिषि लिङ्। अत्र कवित्वधाराकृतमन्दीभवनकर्मणि तत्कृतमकरन्दसकाशात् करादानं वस्तुतोऽसदपि शब्दार्थोभयसाधारणकरपदश्लेषमूलाभेदातिशयोक्तिसम्पन्नमहेतुरेव हेतुत्वेनोपन्यस्तमिति हेतूत्प्रेक्षा ॥ १६ ॥

अथ वामनकविं प्रस्तौति—

**पदेन दिव्यध्वनिभासुरेण रसोर्मिमग्नान्रचयन्कवीन्द्रान् ।**
**दूरीकृतोन्मेषदुरीहकाव्यः स वामनो भाति समुन्नतश्रीः ॥ १७ ॥**

पदेनेति—दिव्येन वाच्यातिशायितया लसमानेन। ध्वनिना व्यञ्जनया भासुरेण शोभमानेन। अन्यत्र दिवि अध्वनीति पदच्छेदः, गगनमार्ग इत्यर्थः। भासुरेण प्रकाशमानेन। पदेन सुबन्ततिङन्तादिना; जातावेकवचनम्, पदैरित्यर्थः। एकेनैव पदेन सहृदयाह्लादे कृते किमु वक्तव्यमनेकैरिति तदीयप्रबन्धस्यातिप्रशस्तत्वं व्यज्यते। अन्यत्र चरणेन। कवीन्द्रान् महाकवीन् सहृदयानित्यर्थः। अन्यत्र पक्षिमुख्यान्। इदं च गगनचारिणां सर्वेषामुपलक्षणार्थम्। रसानां शृङ्गारादीनाम्। ऊर्मिषु तरङ्गेषु मग्नान् निमज्जितान् स्वीयसाहितीरसास्वा-

दमुदितानिति भावः । अन्यत्र रसानां सलिलानां ऊर्मिषु मग्नान् स्वीयचरणाङ्गुष्ठनखनिर्भिन्नविध्यण्डविनिसृतस्वर्गङ्गातरङ्गसंवलितानितिभावः । रचयन् कुर्वन् । तथा दूरीकृतः दूरनिरस्तः उन्मेषः विकासः प्रचार इति यावत् येषां तादृशानि । दुरीहाणां मन्दमतीनां कुकवीनामिति भावः । काव्यानि प्रबन्धा येन तादृशश्च सन् । अस्य कवितारसानुभवे कुकविप्रबन्धा निरस्ता भवन्तीति भावः । अन्यत्र दूरीकृतः निराकृतः, अपुनरुद्भवं यथा तथा स्वरूपनाशं गमित इति भावः । उन्मेषः चक्षुरुन्मीलनं यस्य तादृशः । अत एव दुरीहः भाविकार्यविचारविधुरः । काव्यः शुक्रः । "शुक्रो दैत्यगुरुः काव्यः" इत्यमरः । येन तादृशः काणीकृतभार्गव इति भावः । अत्र वामनावतारे पदत्रयपरिमितां भुवं याचते भगवते तां प्रदातुमुद्यते बलौ तत्कर्मविदितवता भार्गवेण प्रतिषिद्धेऽपि प्रदानमप्यसंमन्यमाने दातुं प्रवृत्ते कुण्डिजलनिर्गममार्गे चक्षुर्गोळेन पिहिते सति तत्कर्मविजानता वामनेन कुशाग्रेण कुण्डिगळद्वारनिहित नयनगोळमपच्छिन्नमभूत् । तदारभ्य भार्गवः काण इति कथात्रानुसन्धेया । समुन्नता सर्वोत्कृष्टा श्रीः वाग्विभूतिः यस्य तादृशः । अन्यत्र समुन्नता सत्यलोकादुपरि ब्रह्माण्डखर्परपर्यन्तमुच्छ्रिता श्रीः चरणशोभा यस्य तादृशः । सः प्रसिद्धो वामनः वामनाख्यः कविः त्रिविक्रमश्च । भाति दीव्यति । प्रकृताप्रकृतश्लेषः, भगवतोऽपि कीर्तनात् । विवक्षितत्वे तु श्लेषः ध्वनिर्वा ॥ १७ ॥

अथ अगस्त्यकविं प्रस्तौति—

**जडाशयानां[1] हृदयं जगत्यां यस्योदयाद्यातितमां प्रसादम् ।**
**स एव[2] सारस्वतमर्मवेदी विभाति मौलौ विदुषामगस्त्यः ॥ १८ ॥**

जलेति—यस्य अगस्त्यस्य कुम्भयोनेश्च उदयात् उत्पत्तेः निशास्वप्रकाशनाच्च नक्षत्रवत् खगोळगतस्यागस्त्यापि मरीचिभिर्वा मेरुणा वा तिरोधानसमय एवमतिरोहितो यदा रात्रौ दिवि दृश्यते स एवोदयः । स च शरत्समय एव ध्रुवचक्रगत्यधीनतया भवतीति वेदितव्यम् । तदा तु भुवि वापीकूपसरित्समुद्रा-

[1] A. जलाशयानाम्. [2] G. एषः.

दयः सर्वे निर्मला भवन्तीति प्रसिद्धम् । जडाशयानां मन्दमतीनाम् सारस्वतसारानभिज्ञानामिति भावः । हृदयं चित्तम् कर्तृप्रसादं नैर्मल्यं कविहृदयपरिज्ञानकौशलं स्वीयकवितायां क्लिष्टत्वमन्तरा सरळत्वं च यातितमां विशेषतो भजति । अतिमन्दानपि स्वप्रतिभाप्रागल्भ्यादीन् सर्वविद्यापारगान् करोतीति भावः । "या प्रापणे" इति धातोर्लडन्तादतिशयार्थे "तिङश्च" इति सूत्रेण तमबन्तात् "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" इत्याम्प्रत्ययः । अन्यत्र डलयोरभेदात् जळाशयानां सरित्कासारादीनां हृदयं आन्तरभागोऽपीत्यर्थः । प्रसादं नैर्मल्यं यातितमाम्, सारस्वतस्य साहित्यस्य मर्म सारं वेत्तीति तादृशः । अन्यत्र सारस्वतं समुद्रसम्बन्धि मर्म सर्वसारं वेत्तीति तादृशः । सप्तानामपि सागराणामगस्त्येनाचान्तत्वादिति भावः । स एष ईदृशमहिमवत्तया प्रसिद्धः अगस्त्यः अगस्त्यनामा कविः कुम्भसम्भवश्च विदुषां कवीनां ज्ञानिनां च मौलौ शिरसि विभाति भासते । सकलविद्वन्मण्डलोपलालितो भवतीति भावः । प्रकृताप्रकृतश्लेषः ॥ १८ ॥

अथ सर्वेषां कवीनामिह प्रशंसनीयत्वेऽपि प्रत्येकप्रशंसायाः कवीनामानन्त्येन दुस्साधत्वं मन्वानः सामान्येन सर्वान् कवीन् प्रस्तौति—

**सर्गेषुसर्गेषु विचित्रतत्तद्वृत्तानुरोधेन विनैव यत्नम् ।**
**व्यक्तं व्यवस्थापितवृत्तिभेदाः परे च वाचामधिपाः प्रथन्ताम् ॥१९॥**

सर्गेष्विति—सर्गेषुसर्गेषु प्रत्यध्यायम् । "सर्गःस्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु[1]" इत्यमरः । "नित्यवीप्सयोः" इति वीप्सायां द्विरुक्तिः, एकं पदम् । विचित्राणां नानाविधानां तेषां तेषां च वृत्तान्तानां चरित्राणां वसन्ततिलकादीनां च अनुरोधेन अनुवर्तनेन अविरोधेनेत्यर्थः । प्रतिपाद्यरसानुगुण्येनेति भावः । यत्नं प्रयत्नं तत्तदनुगुणपदान्वेष[ण] प्रयासम् । विनेव अन्तरैव । वश्यवाचां रसानुगुणा वाचः स्वयमेव वदनान्निस्सरन्तीति भावः । व्यक्तं स्फुटं यथा तथा । व्यवस्थापितः प्रपञ्चितः, वृत्तीनां कैशिक्यादीनाम्, भेदः

[1] The original manuscript has वृत्तिषु and it has been changed on the authority of the edition printed with Bhānuji Dīkṣita's commentary.

वैलक्षण्यं यैस्तादृशः । स्वनिबन्धनेष्वेकैकाध्यायेषु विभिन्नशृङ्गारादिरसभेदे-नात्यन्तसुकुमारेषु सुकुमारातिप्रौढेषु प्रौढरूपतया सदृशपदसन्निवेशेन च विभिन्ना वृत्तीः प्रपञ्चयन्त इति भावः । तदुक्तम् "कैशिक्यारभटी चैव सात्त्वती भारतीति च । चतस्रो वृत्तयो ज्ञेया रसावस्थानसूचकाः ॥ अत्यन्तसुकुमारार्थ-सन्दर्भा कैशिकी मता । अत्युद्धतार्थसन्दर्भा वृत्तिरारभटी मता । ईषन्मृद्वर्थसन्दर्भा सात्त्वती वृत्तिरिष्यते । ईषत्प्रौढार्थसन्दर्भा वृत्तिरारभटी मता ॥ अत्यन्तसुकुमारौ द्वौ शृङ्गारकरुणौ मतौ । अत्युद्धतरसौ रौद्रबीभत्सौ परिकीर्तितौ । हास्य-शान्ताद्भुताः किञ्चित्सुकुमाराः प्रकीर्तिताः । ईषत्प्रौढौ समाख्यातौ रसौ वीरभयानकौ ॥ अतिप्रौढस्तु सन्दर्भस्संयुक्तपरुषाक्षरः । ईषत्प्रौढस्त्वसंयुक्तैस्तैरेव परिकल्पितः ॥ अत्यन्तसुकुमारोऽयमयुक्तललिताक्षरैः । संयुक्तैर्ललितैरीषत्सुकुमार उदाहृतः ॥" इति । अन्यत्र, सर्गेषुसर्गेषु प्रतिब्रह्मसृष्टि । विचित्राणां नानाविधा-नाम् । तत्तद्वृत्तानां तत्तज्जीवराश्यनुष्ठितपूर्वजन्मसुकृतदुष्कृतानाम्, अनुरोधेन अनुवर्तनेन, तत्तत्प्रारब्धकर्मानुसारेण । यत्नं विनैव सङ्कल्पमात्रेणेति भावः । व्यक्तं विस्पष्टतया । व्यवस्थापितः निर्वर्तितः वृत्तीनाम् जीवनानां अयाचितादीनां भेदः वैचित्र्यं यैस्ते । परे प्रत्येकनामग्रहणपूर्वकं प्रतिपादितेभ्यः कविभ्योऽन्ये । अन्यत्र, परे मुख्याः निखिलप्रपञ्चनिर्मातारो विधातारः । वाचां वाग्रूपाणां साहितीनां अधिपाः प्रवर्तकाः कवय इत्यर्थः । वाचां सरस्वतीनां अधिपा नायकाः पितामहाः प्रतिब्रह्मप्रलयवेधसां भारतीनां च विभिन्नतया बहुवचनम् । प्रथन्तां प्रख्याता भवन्तु । "प्रथ प्रख्याने" इति धातोरात्मनेपदे लोट् । प्रकृताप्रकृत[श्लेषः] विधातॄणामपि विवक्षितत्वे प्रकृतोभयश्लेषः, प्रकृतार्थध्व-निर्वा ॥ १९ ॥

अथ कविः स्वात्मनः पितरं श्रीनिवासाध्वरिनामानं रत्नखेटदीक्षित इति जगत्सु प्रख्यातं द्वाभ्यां कुळकेनाह—

**भाति क्षितौ [1]वासरभासुरोच्चैः प्रदीपचिह्नो भगवत्प्रपन्नः ।**
**अशेषभाषाकविताप्रवीणो वादोद्भटो व्याकृतसर्वतन्त्रः ॥ २० ॥**

[1] G. भासुरवासरोच्चैः.

भातीति—वासरे दिवसे भासुरौ द्योतमानौ कनकदण्डादिमण्डितत्तया दिवसधृतत्वेन च महाबिरुदरूपाविति भावः । उच्चैः उन्नतौ अत्युच्छ्रितगजमस्तकोपरि धार्यमाणत्वादिति भावः । प्रदीपौ चिह्नं अनितरसाधारणबिरुदरूपौ यस्य तादृशः । निरवद्यविद्यावैशद्यप्रमुदितमहीभृदतिसृष्टानवधिकबिरुदवानित्यर्थः । भगवन्तं षाड्गुण्यपरिपूर्णमीश्वरम् । प्रपन्नः प्राप्तः शरणत्वेनेति भावः । तेन उक्तबिरुदादिकं न स्वकामनाधीनम् । किं तर्हि ? मुदितमहीभृन्मोदायत्तमिति व्यज्यते । तथा अशेषासु निखिलासु भाषासु संस्कृतप्राकृतमागधपैशाचापभ्रंशादिषु शास्त्रीयासु ; तथा आन्ध्रकर्णाटमहाराष्ट्रद्रमिडादिषु, मिश्रगौडमैथिलादिषु च लौकिकासु । कवितायां कवित्वे । एकैकतत्तद्भाषावलम्बनप्रबन्धनिर्माणे द्वित्रिचतुरादिभिर्भाषाभिर्नानाप्रबोधकैकशब्दप्रयोगात्मकविविधकृतिविरचने चेति भावः। प्रवीणः निपुणः । वादे विवादे । विप्रतिपत्तिविरचनपूर्वकप्रतिभटनिखिलविद्वद्विजय इति भावः । उद्भटः समर्थः तथा व्याकृतानि व्याख्यातानि न केवलं पठितपाठितमात्राणि तत्तदर्थप्रकाशकप्रत्यग्रप्रबलप्रबन्धप्रपञ्चितार्थानीति भावः । सर्वाणि तन्त्राणि शास्त्राणि पतञ्जलिकाणादगौतमजैमिनिव्यासकपिलादिप्रपञ्चितानीति भावः, येन तादृशः ॥ २० ॥

किञ्च—

**ध्वन्यध्वनीनो दशरूपकोच्चैः क्रियाकृतश्रीरमणानुकारः ।**
**विख्यातिमान्विश्वजिता मखेन श्री श्रीनिवासाध्वरिसार्वभौमः॥२१॥**

ध्वयध्वेति—ध्वन्यध्वनीनः ध्वनिमार्गसञ्चरणशीलः वाच्यातिशायिव्यङ्ग्यरूपोत्तमकाव्यकृतिकुशल इति भावः । तद्गच्छतीत्यर्थे "अध्वनो यत्खौ" इति खप्रत्ययः । "अध्वनीनोऽध्वगोऽध्वन्यः" इत्यमरः । [दश]विधानां रूपकाणां नाटकादीनाम् । रूप्यन्ते प्रकाश्यन्ते अर्था अमीभिरिति रूपकाणि दृश्यप्रबन्धाः । प्रशंसायां कप्रत्ययः । रूपकाणां दशविधत्वमुक्तं काव्यप्रकाशे—"नाटकं च प्रकरणं भाणः प्रहसनं डिमः । व्यायोगसमवाकारौ वीथ्यङ्केहामृगा इति" इति ॥ तेषु उच्चैः उत्कृष्टतया अनितरसाधारणया क्रियया प्रबन्धविरचनव्यापारेण कृतः अचरितः । श्रीरमणस्य लक्ष्मीपतेः विष्णोः अनुकारः अनुकरणं स्वयमपि तत्कृतकर्मानुष्ठान-

रूपं येन तादृशः। विष्णुपक्षे दशसु मत्स्यकूर्मादिरूपेण दशविधेषु रूपकेषु मूर्तिषु। उच्चैः उत्कृष्टा अमानुषा वेदाहरणभूम्युद्धरणसमुद्रसेतुबन्धादय ऊहनीयाः। चर्मोत्सेधरूपतया स्वीयभुजशिखरस्थिताभ्यां शङ्खचक्राभ्यां सहैवोत्पन्नतया साक्षाद्विष्णोरंशरूपत्वेऽपि भाव्यमाने उक्तविधया दशविधरूपकाचरणमपि संवादिप्रमाणं भवतीति भावः। विश्वजिता विश्वजिदाख्येन मखेन क्रतुना विख्यातिमान् प्रसिद्धियुक्तः विश्वजिद्याजीति भुवनप्रसिद्ध इत्यर्थः। श्रीमान् अणिमाद्यष्टसिद्धिसम्पन्नः श्रीनिवास इति कृतनामा। अध्वरीणां यज्वनां सार्वभौमः श्रेष्ठः। क्षितौ भूम्याम्। भाति द्योतते। अखण्डभूवलयविख्यातो भवतीति भावः। भातीति वर्तमानार्थकलट्प्रयोगात्तादृशे जीवत्येवानेन कविनाऽयं प्रबन्धो निर्मित इति गम्यते। विष्णुसादृश्यवर्णनात् उपमा ॥ २१ ॥

अथात्मनो वैमात्रेयमग्रजं केशवदीक्षितं स्तौति—

**गाधेयवंशाम्बुधिसंभवो यो वसिष्ठनिष्ठां विदधे लघिष्ठाम्।**
**सुधाझरीसोदरवाग्विलासो दीव्यत्यसौ केशवदीक्षितेन्द्रः[1] ॥ २२ ॥**

गाधेयेति—गाधेयस्य विश्वामित्रस्य वंशः अन्वय एव अम्बुधिः सागरः तस्मात् सम्भव उत्पत्तिर्यस्य, विश्वामित्रगोत्रज इत्यर्थः। यः केशवदीक्षितः। वसिष्ठस्य ब्रह्मसूनोर्मुनेः निष्ठां नियमं विधिविहितानां कर्मणामवैकल्येनाचरणं निरन्तरतपस्थितिं वा तपसा चिन्तितार्थसंसाधनं वा। "निष्ठानिर्वहणं समः" इत्यमरः। लघिष्ठां अत्यन्तमल्पीयसीम्। "अतिशायने तमबिष्ठनौ" इति इष्ठन् प्रत्ययः। विदधे व्यतानीत्। विपूर्वाद्धधातेः कर्तरि लिट्। विश्वामित्रवंशजोऽयं तस्य वसिष्ठात् पराभवजनितमयशः प्रमार्ष्टुमिव वसिष्ठं निष्ठया व्यजयत्किमिति भावः। सुधाझर्याः अमृतासारस्य सोदरः सहजः सदृक्ष इत्यर्थः। वाग्विलासः सारस्वतोन्मेषः यस्य तादृशः स इत्यध्याहारः। सोऽसौ उक्तगुणसंपन्नः केशवनामा दीक्षितानां यज्वनां इन्द्रः श्रेष्ठः। दीक्षितेन्दुरिति पाठे दीक्षित एव इन्दुश्चन्द्र इत्यर्थः। दीव्यति विद्योतते। [2]इन्दुरिति पाठे गाधेयवंशस्याम्बुधित्वरूपणेन

[1] दीक्षितेन्दुः is another reading noted by the commentator.

[2] The manuscript has इन्द्र इति but it is evidently a mistake.

तदुद्भूतेऽस्मिन् इन्दुत्वरूपणं गम्यत इत्येकदेशविवर्ति । इन्दुरिति पाठे समस्तवस्तुविषयकं सावयवरूपकं सुधाझरीसोदरेत्यार्थीचोपमासंसृष्टिः ॥ २२ ॥

अथात्मनः सहोदरमग्रजं गुरुमर्धनारीश्वरं प्रस्तोतुकामः कविः "आत्मनाम गुरोर्नाम [नामाति] कृपणस्य च । श्रेयस्कामो न गृह्णीयात् " इति गुरुनामग्रहणनिषेधस्यानुवादरूपतया क्वचित् गुणीभावरूपतया वावश्याख्येयत्वे दोषाभावं मन्यमानः तदीयां वाचमेव स्तौति—

[1]विरिञ्चिकान्ताकरपद्मचञ्चद्विपञ्चिकानिक्कणवञ्चकश्रीः ।
षड्दर्शनी[2] केळिसखी चकास्ति वागर्धनारीश्वरवादिमौलेः ॥२३॥

**विरिञ्चीति**—विरिञ्चिकान्तायाः सरस्वत्याः । "विरिञ्चिश्च विरिञ्चनः" इत्यमरशेषः । करपद्मे पाणिपङ्कजे चञ्चन्त्याः चलन्त्याः वाद्यमानाया इति भावः । विपञ्चिकायाः वीणायाः कच्छपीनाम्न्याः । "सरस्वत्यास्तु कच्छपी" इत्यमरः । निक्कणस्य निनादस्य वञ्चिका वञ्चयित्री तद्विजेत्रीति यावत् । श्रीः शोभा माधुर्यमिति भावः । यस्यास्तादृशी षण्णां दर्शनानां शास्त्राणां समाहारः षड्दर्शनी । इदं च सर्वविद्योपलक्षकं तस्याः केळिसखी विहारसहचरी तत्तन्त्रसिद्धान्तानुवर्तिनीति भावः । यद्वा षड्दर्शनी केळी सखी यस्या इति बहुव्रीहिः । तेन वाचः प्राधान्यं षड्दर्शन्या गुणीभावश्च व्यज्यते । तेन स्वैरादित्वरामपि तदीयां वाणीं सर्वाणि तन्त्राण्यनुवर्तन्त इति तस्य महामहिमत्वं व्यज्यते । अर्धनारीश्वरनाम्नः वादिनां विवादशीलानां विदुषां मौलेः किरीटभूतस्य समस्तविद्वद्भिः शिरसोपलालितस्येत्यर्थः । वाक् वाणी चकास्ति भासते । "काशृ दीप्तौ" इति धातोः लट् । अत्र साक्षात् गुरुनामसंकीर्तनस्यायुक्तत्वेऽपि वाचि गुणीभूतस्य कथं न दोषावहमिति तदीयवागनुधावनमिति मन्तव्यम् । अत्र करपद्ममित्युपमा । केळिसखीति वादिमौलेरिति च रूपके वृत्त्यनुप्रासश्चेति तेषां संसृष्टिः ॥ २३ ॥

एवं महाकविप्रशंसां विशिष्य सामान्येन चारचय्य सांप्रतं धर्मशास्त्रेषु "कन्यादानं वृषोत्सर्गः सदहः पापकुत्सनं" इति खलनिन्दायाः साधुप्रशंसया

[1] G. विरिञ्च. [2] A and G. षड्दर्शिनी.

सहैव करणीयतया विधानात् दोषाभावस्य विगुणत्वेनोपचारात् खलेषु दोषोद्भावने साधुषु तदभावप्रतीत्या तथाविधसाधुगुणवर्णनाविश्रान्तत्वाच्च कुकविनिन्दामाह—

**शय्यारसालंकृतिरीतिवृत्तिवृत्तोज्झिता गूढपदप्रचारा ।**
**गुरौ च वर्णे[1] कुरुते लघुत्वमसत्कृतिश्चौर्यरतिक्रियेव ॥ २४ ॥**

शय्येति—शय्या पदानामानुगुण्येन विन्यासः । तदुक्तं "पदानुगुण्यविश्रान्तिः शय्या शय्येव संमता" इति । रसाः शृङ्गारादयः । अलंकृतयः अनुप्रासोपमादयः । रीतयः वैदर्भीप्रभृतयः । तदुक्तम् "रीतिर्नाम गुणाश्लिष्टवर्णसंघाटना[2] मता" इति । गुणाः माधुर्यौजःप्रभृतयः । वृत्तयः कैशिक्यादयः पूर्वोक्ताः । वृत्तानि मात्रावर्णघटिततया छन्दश्शास्त्रविहितान्यार्यादीनि, तैः उक्तलक्षणैः, उज्झिता त्यक्ता, कथञ्चिद्रसादिप्रतीतावपि अस्थाननिवेशविसदृशघटनादिना दूष्यतया यथोदितैस्तैर्विहीनेति भावः । अन्यत्र शय्या तल्पः चौर्यरतौ तल्पादीनामसंभवात् । रसो रागः अभिरतिरित्यर्थः । निद्रादिना परवशासु परवनितासु प्रवर्तितस्य सुरतस्य नायिकानुरागवैकल्यात् तस्य चैकत्रैवानुरागश्चेति रसाभासतया रसत्वाभावात् । तदुक्तम्—"एकत्रैवानुरागश्चेत्तिर्यङ्म्लेच्छगतोऽपि वा । योषितां बहुसक्तिश्च रसाभासस्त्रिधा मतः" इति । यद्वा रसाः द्रवाः कर्पूरकस्तूरीचन्दनादयः प्रकाशभिया तेषामसंभावितत्वात् ; अलंकृतयः मञ्जीरनूपुरकङ्कणादयः शिञ्जितेङ्गितादिना प्रकाशभिया तेषामसंभवात् ; रीतिः पातिव्रत्यपरनारीपराङ्मुखत्वादयः तादृशस्य तादृशकर्मणि प्रवृत्तेरेवाभावादिति भावः ; वृत्तिः वर्तनं यत्र क्वचन रमणीये देशे यथाभिलषितावस्थानमिति भावः ; वृत्तं समयाचारः ; एतैः उज्झिता वर्जिता चौर्यरतावमीषां उक्तविधाः असंभावितत्वात् तथा गूढः गुप्तः सहृदयानामप्यवेद्यः, पदानां सुबन्ततिङन्तानां प्रचारो विश्रामस्थानं यस्यां तादृशी । अन्यत्र गूढः शब्दादिनाप्यन्ये यथा न विद्युः तथा मृदुतया प्रवर्तत इति भावः । पदयोः चरणयोः प्रचारो विन्यासो यस्यां तादृशी ईदृशी

[1] G. वर्गे.

[2] The printed text of the Pratāparudrīya reads पदसंघटना.

असत्कृतिः कुकविप्रबन्धः चौर्येण स्तैन्येन संपादिता रतिक्रिया संभोगव्यापारः स इव गुरौ मात्राद्वयात्मके वर्णे अक्षरे लघुत्वं एकमात्राकालोच्चार्यत्वं लघुस्थानविन्यसनमिति भावः। अन्तस्थस्य गुरुत्वेऽपि कुकविनिबन्धनेषु लघुस्थानविन्यसने तस्य गुरुत्वेनोच्चारणानर्हत्वादिति भावः। एवं लघौ वर्णे गुरुत्वमप्यूह्यम्। अन्यत्र गुरौ उत्कृष्टे वर्णे ब्रह्मक्षत्रादौ आभिजात्यादिगुणयुक्त इति भावः। लघुत्वं अल्पत्वं हेयतामिति यावत्। कुरुते करोति। श्लेषालङ्कारः। यथेयं चौर्यरतिर्निन्द्या तथैव कुकविप्रबन्धा इत्युपमालङ्कारध्वनिः ॥ २४ ॥

**अधो गुणानाकलयन्नशेषानसज्जनः पद्मवदात्तगन्धः।**
**राज्ञः पुरोदर्शितमौनमुद्रः प्रायेण जायेत जलानुषङ्गी[1] ॥ २५ ॥**

अध इति—असज्जनः खलः कुकविश्च। पद्मवत् कमलवत्। निखिलान् गुणान् दयादीन् श्लेषादींश्च। अधः निकृष्टत्वेन। आकलयन् तिरस्कुर्वन् सन्। स्वयमुक्तगुणविकलः परगतमपि गुणं दोषत्वेन व्यपदिशन्नित्यर्थः। अन्यत्र गुणान् मृणालतन्तून्, अधः अधोभागे, आकलयन् कुर्वन्, पद्मादधोदेश एव तन्तूनां मृणालान्तरवस्थानादिति भावः। तथा राज्ञः नृपस्य, पुरः पुरस्तात्, राज्ञां सभास्विति भावः। दर्शिता प्रकटिता मौनस्य असंभाषणस्य मुद्रा अधरोष्ठमेलनं येन तादृशः। प्रत्यक्षे साधुत्वं मौनेनाभिनीय परोक्षे पैशुन्यमाचरन् सभायां स्वीयवागुत्सर्गे निजं मौढ्यं प्रकटितं स्यादिति मौनेन वैदुष्यमभिनयन्निति च भावः। अन्यत्र राज्ञः चन्द्रस्य पुरः निशायामिति यावत्। दर्शिता मौनं अधरोष्ठतयाध्यवसितदलसंमेलनरूपमुद्राचिह्नं चन्द्रोदये पद्मपरिज्ञाननिमित्तं येन तादृशः। तथा जडैः अनुषङ्गः संसर्गः सोऽस्यास्तीति तादृशः साधुभिः महाकविभिश्च दूरापास्त इति भावः। अन्यत्र डलयोरभेदात् सलिलसंसर्गी उक्तविधया कमलसाम्यं भजन्नित्यर्थः। प्रायेण भूयसा आत्तगन्धः अभिभूतः। "आत्तगन्धोऽभिभूतः स्यात्" इत्यमरः। जायेत भवेत् भवेदेवेति भावः। "जनी प्रादुर्भावे" इति धातोरात्मने पदे लिङ्। अन्यत्र आत्तः प्राप्तः विकाससमयसंपन्न इति भावः। गन्धः परिमळो येन तादृशः पद्मस्येव अधोगुणाकलनादिमतः खलस्य कुकवेश्च

[1] G. जडानुषङ्गी; the commentator also seems to prefer this reading.

कमलवदात्तगन्धत्वमप्यवश्यभाव्येवेति तादृशश्च पराभवः सर्वथा संपत्स्यत एवेति भावः। प्रकृताप्रकृतोभयश्लेषालङ्कारः॥ २९॥

**दोषोन्मुखा दूरत एव सूर्यालोके वहन्तो बहुवैमनस्यम्।**
**अह्नाय घूका इव दुष्टलोका बलान्निरस्या बलिहृत्प्रवेकैः॥ ३६॥**

दोषेति—दूरत एव व्यवहितप्रदेशेऽपीत्यर्थः। सूरिणां विदुषां कवितां च। आलोके दर्शने सति। इदं च श्रवणादीनामप्युपलक्षणम्। बहु अत्यन्तं वैमनस्यं विमनस्कतां दुःखातिशयमिति भावः। वहन्तः उद्वहन्तः, तेषु देवप्रसाद-राजप्रसादादिसंपन्नविद्याविभवातिशयमसहमानाः सन्त इति भावः। अत एव दोषेषु हेयकर्मसु श्रुतिकटुत्वादिषु च उन्मुखाः उद्युक्ताः निषिद्धकर्मणि कुकवितायां चाभिरता इति भावः। यद्वा दोषेषु उन्मुखः परत्र गुणेष्वेव सत्सु यः कश्चिद्दोषः किं स्यादिति तद्गवेषणपरा इत्यर्थः। दोषाभावेऽपि गुणानेव दोषत्वेन प्रतिपादयन्त इति वा। निषिद्धस्यापि क्वचित्तदपवादरूपविध्यन्तरवशात्। तथा श्रुतिकटुत्वादेः दोषत्वेऽपि क्वचिद्रौद्रादिष्वदोषत्वेन च साधु संमतेषु निषिद्धकारिश्रुतिकटुवक्त्रेत्यादिना दूषयन्त इति भावः। अन्यत्र दूरत एव रविसन्दर्शनस्वरूपयोग्यादपि दूरतः प्रभात एवेति भावः। सूर्यस्य रवेः, आलोके दर्शने प्रभायां वा बहुवैमनस्यं वहन्तः सन्तः किमुत साक्षाद्रश्मिसन्दर्शन इति भावः। अत एव दोषोन्मुखा रात्र्युत्सुका रविप्रभाविहीनां रात्रिमेवाकाङ्क्षमाणाः। उलूकानां रात्रावेवोन्मेषादिति भावः। ईदृशा दुष्टलोका दुर्जना दुष्कवयश्च बलिं राजदेयद्रव्यं हरन्ति बलिहृतो राजानः तेषां प्रवेकैः श्रेष्ठैः तेषामेव दण्डाधिकारादिति भावः। बलं प्रतिभाप्राचुर्यं तदस्यास्तीति बली। तादृशं हृत् हृदयं येषां ते विपश्चितः तेषां प्रवेकैः। अन्यत्र बलिहृतां वायसानाम्। "बलिभुग्वायसा अपि" इत्यमरः। तेषां प्रवेकैः घूका उलूका इव। "दिवान्धः कौशिको घूकः" इत्यमरः। अह्नाय सत्वरं बलात् हठेन निरस्याः त्याज्याः, राज्याद्भ्रंशयितव्या इत्यर्थः। "सर्वापराधे विप्रस्य विषयान्ते विसर्जनम्" इति वचनानुरोधेन विप्राणां कायिकदण्डाभावादिति भावः। अत्रापि प्रकृताप्रकृतोभयश्लेषः। दिवसे यथा काका उलूकान् दर्श-

दर्शं घातयन्ति । एवं दुर्जना दुष्कवयश्च राजभिर्विपश्चिद्भिश्च दूरतो निर्वास्या इत्युपमालंकारध्वनिः ॥ २६ ॥

इत्थं दुर्जनैः स्वग्रन्थस्य निन्द्यतामुद्भाव्य तद्धिक्कृतिमप्युक्त्वा अविद्यमानदोषोद्भावनमकिञ्चित्करं प्रत्युत दुर्जनोद्भावितदोषस्य सत्यत्वासत्यत्वविचाराय स्वग्रन्थमालोचयतां सहृदयानां दोषासत्यत्वप्रतिभानपूर्वमत्रत्यगुणानामेव बहूनां स्फोरकतया श्लाघापर्यवसाय्येवेति दुर्जनदूषणमपेक्षणीयमेवेति पूर्वोक्तमाक्षिपति—

**विशृङ्खलानां [1]विततिः खलानां कामं करोतु क्षतिमत्र काव्ये ।**
**शाणोपलाघर्षणतः समिन्धे सौरभ्यसंपन्ननु चन्दनस्य ॥ २७ ॥**

**विशृङ्खलानामिति**—विगता शृङ्खलाबन्धः मर्यादेति यावत् । येषां तादृशानां लज्जामानादिबहिर्भूतानामुद्वृत्तानामिति भावः । खलानां दुर्जनानां विततिः संहतिः । अत्र काव्ये कर्तव्यतया निश्चितेस्मिन् रुक्मिणीकल्याणाख्ये प्रबन्धे क्षतिं दोषारोपं कामं करोतु सुतरां विधत्तां आपाततोऽनिष्टमपीदमालोच्यमानमिष्टमेव, अतो विधत्तामिति भावः । "अकामानुमतौ कामम्" इत्यमरः । करोतेर्लोट् । विततिरित्युक्त्या संघीभूय दूषयन्तु । न तेनास्य विहतिः प्रत्युत प्रागुक्तविधया श्लाघापर्यवसानेन दूषणमप्यपेक्षणीयमेवेति भावः । अमुमेवार्थं दृष्टान्तेन समर्थयन्नाह—चन्दनस्य चन्दनकाष्ठस्य । शाणोपले निकषदृषदि । आसमन्तात् घर्षणतः कर्षणात् सौरभ्यस्य परिमळस्य संपत् श्रीः अतिशयितं सौरभ्यमित्यर्थः । समिन्धे ननु समेधते खलु । संपूर्वात् "इन्ध दीप्तौ" इति धातोरात्मनेपदे लट् । चन्दनखण्डस्य शाणकर्षणं स्वतो दृढतयाऽल्पप्रसरणस्य तदीयगन्धस्य बहुप्रसरणफलायैव खलु भवति न पुनस्तद्दूषणाय तद्वदिहाप्यापातदृष्टिकृतां सहृदयानां दुर्जनोद्भावितदोषविचाराय गाढावगाहनकृतामत्रत्यरसभावगुणालंकारादीनामुल्लसने काव्यमिदमखिलोपलालनीयमेव भवेदिति भावः । दृष्टान्तालंकारः । पूर्वैकवाक्यत्वे त्वाक्षेपोऽपि पूर्वार्धे अनिष्टाभ्युपगमरूपानुज्ञयानुगृहीतार्थस्य दृष्टान्तेन समर्थनादनुज्ञानुप्राणितो दृष्टान्तालङ्कार इति केचित् । दृष्टान्तानुप्राणितैवानुज्ञेत्यपरे ॥

[1] G. विमतिः.

अथ प्रसङ्गात् विदुषां सहृदयानां च स्वकाव्योत्कर्षनिर्वाहकाणां क्षेममाशास्ते—

**निकष्य मेधानिकषोपलेषु सुवर्णतत्त्वं[1] परिशोधयन्तः ।**
**अलंक्रियार्थं सुदृशामवन्यां कामं कलादास्सुखिनो भवन्तु ॥ २८ ॥**

**निकष्येति**—अवन्यां भूमौ । कलाः विद्याः साहितीः स्वीयाः परकीयाश्च ददति शिष्येभ्यः प्रयच्छन्ति ; आददति विजानन्तीति वा विद्वांसः सहृदयाश्च । अन्यत्र कलाः कनकोत्कर्षापकर्षनिमित्तभूता वर्णापरनामानः ताः आददति निकषोपले रेखाकारेण संगृह्णन्ति । विजानन्तीति वा स्वर्णकारा वणिजो वा । सुष्ठु पश्यन्तीति सुदृशः । गुणदोषावगमनसमर्थाः पण्डिताः सहृदयाः । तेषां अलंक्रियार्थं भूषणार्थं सहृदयाह्लादाय कवेस्तत्सूक्तीनां वा अनुमोदाय च । अन्यत्र सुदृशां कामिनीनां अलंक्रियार्थं केयूराङ्गदकङ्कणादिरचनार्थम् । मेधा प्रतिभैव निकषोपलाः शाणोपलाः तेषु निकष्य उद्घृष्य प्रज्ञया परिचिन्त्येति भावः । सु शोभनानां, अर्थतः शब्दतश्च । मधुराणां वर्णानां अक्षराणाम् । अन्यत्र सुवर्णानां कनकानां तत्त्वं सगुणत्वनिर्गुणत्वादिस्वरूपम् । अन्यत्रापाततः स्वर्णवत्प्रतीयमानेभ्यः त्रपुप्रभृतिभ्यो विशेषं परिशोधयन्तः विचारयन्तः प्रपञ्चयन्तश्च सन्तः कामं अत्यन्तं सुखिनः कुशलिनः भवन्तु सन्तु निवसन्त्विति यावत् । भवतेराशिषि लोट् । अस्मत्कवितोपलालनं तद्दूषकदुर्जननिरसनं च मा भूत् । तादृशाः कलादाः परं भूमौ निवसन्तु । तावतैवास्मदभीष्टसिद्धिः स्वयमेव संपत्स्यत इति भावः । श्लेषानुप्राणितं सावयवं रूपकमलंकारः ॥ २८ ॥

अथ लोकोपकारिणः साधुजनानभिष्टौति—

**राज्ञः प्रसादं विरचय्य शश्वदङ्कूरयन्तीकुमुदानुकूल्यम् ।**
**समादधाना बहुधान्यवृद्धिं सतां सभा भाति शरन्निकाशा ॥२९॥**

**राज्ञ इति**—सतां साधूनां विदितवेदितव्यानां अखिलदयाद्यष्टगुणसंपन्नानामिति भावः । सभा समाजः राज्ञो नृपस्य प्रसादं चित्तनैर्मल्यं सर्वभूतानुकंपामिति

[1] G. वर्ण्यमत्त्वं ।

भावः। विरचय्य उत्पाद्य। विपूर्वात् "रच प्रतियत्ने" इति धातोर्हेतुमण्णिजन्तात् समासे 'अनञ्पूर्वे क्त्वो ल्यप्' इति ल्यप्। शश्वत् प्रतिपदम्। कोः भूमेः। "गोत्रा कुः पृथिवी" इत्यमरः। सर्वेषां प्राणिनामिति यावत्। मुदः प्रीतेः आनुकूल्यं सहकारित्वम्। अङ्कुरयन्ती उत्पादयन्ती सती स्वयं राजादिमुखेन च सर्वप्राणिसौख्यं विदधाना सतीति भावः। अन्यत्र राज्ञश्चन्द्रस्य प्रसादं नैर्मल्यं विरचय्य शश्वत् कुमुदानां कैरवाणां आनुकूल्यं वृद्धिसाधनतां अङ्कुरयन्ती चन्द्रस्य ओषधीशतया वर्षासंभावितं जलदावरणमपोह्य ज्योत्स्नाप्रसरणेन कैरवाभिवृद्धिसाधनीभूता सतीति भावः। अथ च बहुधा बहुप्रकारेण उक्तविधयान्यविधयापीत्यर्थः। अन्यवृद्धिं परोपकरणं सम्यक् आदधाना कुर्वाणा च सती सर्वात्मना कुर्वन्तीति-भावः। अन्यत्र बहूनां धान्यानां शाल्यादीनां वृद्धिं समादधाना शरत्समय एव प्रथमं धान्योत्पत्तेर्विख्यातत्वात्। ततश्च शरन्निकाशा शरत्समयसदृक्षा भाति दीप्यति "भा दीप्तौ" इति धातोर्लट्। श्लेषः उपमाध्वनिः॥ २९॥

अथ महाकवीन् स्वविनयप्रपञ्चनपूर्वमात्मनो ग्रन्थारम्भणमपराधमेव संभावयन्नमून् क्षमापयति—

**जल्पामि कौतूहलतो यदल्पधीरप्यहं[1] तत्कवयः क्षमन्ताम्।**
**वक्रे[2]ऽपि काव्ये धनुषीव शूराः [3]प्रायो गुणारोपपरा हि सन्तः॥३०॥**

जल्पामीति—अहं, अल्पा परिमिता तत्तादृशोत्तमकाव्यरचनाऽचतुरेति भावः, धीः मनीषा यस्य तादृशोऽपि सन्। तर्हि तत्र तत्र न प्रवर्ततामित्यत आह— कौतूहलतः। भगवच्चरितसंकीर्तनप्रत्याशया, न पुनर्विद्वन्मन्यतया[4] इति भावः। 'आशा गरीयसी पुंसां' इति प्रसिद्धेः। यत् जल्पामि यत् काव्यं रचयामि "जल्प व्यक्तायां वाचि" इति धातोः परस्मै पदे लट्। तत् अतदर्हकर्माचरणरूपमागः। कवयः कवयितारः अनागता वर्तमानाश्चेति भावः। क्षमन्तां मर्षयन्तु। "क्षमूष् सहने" इति धातोरात्मने पदे लोट्। मदीयमिदं काव्यमुपलालयन्त्विति भावः॥

[1] G. अयम्। [2] G. वक्ते। [3] G. भूयः and the commentator also notes it.
[4] G. The original has विद्वन्मन्यतया

ननु भवत्काव्यस्यासमीचीनत्वे गुणैकनिष्ठाः साधवः कथमुपलालयेयुः । अतो दृष्टान्तमुखेन समर्थयति । हि यस्मात् सन्तः साधवः वक्रे कुटिलेऽपि वाच्यातिशायिव्यङ्ग्यतया गूढव्यङ्ग्यतया चात्यन्ततिरस्कृतवाच्येऽपीति भावः; काव्ये प्रबन्धे वक्रे धनुषि कुटिले चापे शूरा इव योद्धार इव प्रायः प्रायेण। भूय इति पाठेप्ययमेवार्थः । अतिशयेनेति च व्यज्यते। गुणानां माधुर्यादीनामारोपः कल्पनं कवितात्पर्यविषयस्याप्यर्थस्यापातपतितपदप्रतिपाद्यतया कथनं आरोपः समन्ततस्तत्रत्यविवेचनमिति च व्यज्यते । सः परो मुख्यः स्वनिर्वाह्योर्थः येषां तादृशाः भवन्तीति शेषः । शूरपक्षे गुणस्य मौर्व्याः आरोपपरा इत्यर्थः । अतो निर्गुणेऽपि गुणारोपणशीलाः साधवः सर्वथा परिगृह्योपलालयन्त्येवेति भावः ॥

वस्तुतस्तु एकतरकोटिनिबद्धस्यैव गुणस्य कोटयन्तरप्रापणस्यारोपपदार्थतया तद्दृष्टान्तानुरोधेन सत एव गुणस्य उद्घाटनमिह विवक्षितम् । अतोऽस्य भावगर्भितत्वेन भावानभिज्ञानामभिज्ञानां वा पातदृष्टिकृतां क्वचित् रसानवगमेऽपि साधवः सहृदयाः सूक्ष्मदृशा विद्यमानमेव गुणं प्रपञ्चयन्त्विवति भावः । न च तर्हि वक्रेऽपीति दोषोद्भावनं कुत इति वाच्यम् । गूढव्यङ्ग्यतया वक्रत्वस्य विशेषाधायकत्वात् । अपिशब्दप्रयोगस्तु आपाततोर्थानवगमे गूढदृष्टिप्रवेशनकृतः प्रयासः परं मत्कृते क्षन्तव्य इति कविप्रार्थनामभिव्यनक्ति । नचैवमल्पधीरित्यप्रयोज्यमिति वाच्यम् । अपरिमेयभगवद्गुणार्णवतरणासमर्थत्वाभिप्रायकतया तस्य विनयपर्यवसितत्वात् । दृष्टान्तानुप्राणितं काव्यलिङ्गमलंकारः । श्लेषोत्थापितो दृष्टान्त इति संकरः ॥ ३० ॥

अथाचिन्त्याप्रमेयगुणार्णवस्य भगवतो गुणवर्णनस्य भगवत्प्रसादमन्तरा दुष्करतां मन्वानो भगवत्कटाक्षपातनप्रसादमाकाङ्क्षमाण आह—

**पवित्रकीर्तेः [1]प्रथमस्य पुंसश्चरित्रसंकीर्तनभाग्यलोभात् ।**
**साहित्यसिन्धुं [2]सहसा तितीर्षोः सांयात्रिकः स्यान्मम तत्कटाक्षः॥**

**पवित्रेति**—पवित्रा पावयित्री निखिलपापनिहन्त्री कीर्तिर्यशः गुणक्रियादिसंकीर्तनं यस्य तादृशस्य प्रथमस्य जगदादिमस्य पुंसः पुरुषोत्तमस्य

[1] G. परमस्य [2] G. तरसा.

श्रीकृष्णस्य । तदुक्तं विष्णुपुराणे—"स एव वासुदेवोऽयं साक्षात्पुरुष उच्यते । स्त्रीप्रायमितरत्सर्वं जगदेतच्चराचरम्" इति ॥ चरित्रस्य रुक्मिणीपरिणयनादिरूपस्य संकीर्तनं कथनमेव भाग्यं भागधेयं ; तत्र लोभात् औत्सुक्यात् भगवद्गुणकीर्तनस्य भाग्यत्वरूपणात् तदितरनैस्पृह्यं व्यज्यते । साहित्यस्य सिन्धुः कवितार्णवं सहसा सत्वरं साध्यासाध्यविचारमन्तरेत्यर्थः । भूयिष्ठधनार्थिनां "न साहसमनारुह्य नरो भद्राणि पश्यति" इति न्यायेन द्वीपान्तरेभ्यो धनाहरणाय समुद्रयात्राया दृष्टचरत्वेऽपि तरणसाधनतरिकस्य धारादिकमनपेक्ष्यैवेति भावः । तितीर्षोः तर्तुमिच्छोः यथाभिमतमभिमतप्रबन्धपरिपूर्तिकामस्येति भावः । परमपुरुषार्थभूतमोक्षनिर्वाहस्य भगवच्चरितोपवर्णनस्य कैमुत्यन्यायेन नान्तरीयकग्रन्थान्तरायनिरासपूर्वकप्रकृतप्रबन्धपरिसमाप्त्यायैहिकफलावाप्तिसाधनत्वं न विहन्यत इति भावः । ईदृशस्य मम मे तत्कटाक्षः तस्य वर्णनीयस्यैव कृष्णस्य कटाक्षः सानुग्रहापाङ्गवीक्षणं सांयात्रिकः कर्णधारः स्यात् । "अस भुवि" इति धातोराशिषि लिङ् । अत्र भगवतः तत्पदेनोपादानात् स्वीयां चरितोपवर्णनप्रतिहतिं स्वयं किं मर्षयेत् न मर्षयेदिति व्यज्यते । तेन च यथा हि बहुधनादिकामः सांयात्रिकसहायमासाद्यार्णवतरणपूर्वकमखिलमप्यभीष्टमवाप्नोत्येवमहमपि भगवत्कटाक्षमहिम्ना प्रतिभादिशक्तिं प्रतिबन्धकनिवृत्तिं प्रकृतग्रन्थपरिपूर्तिं च लभेयमेवेति च व्यज्यते । इत्थं च "पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम्" इति स्मृत्या भगवच्चरितवर्णनात्मकस्यास्यैव प्रबन्धस्य स्वतः परममङ्गलतया विनायकपूजायां तदन्तरायनिवर्तकतत्पूजानपेक्षणवत् इतो मङ्गलान्तरमकिञ्चित्करमिति मत्वा स्वाचरितमङ्गलानां शिरस्यस्य निवेशनं पद्यादौ पवित्रपदसञ्चिन्तनमिति च मन्तव्यम् । समस्तवस्तुविषयकं सावयवरूपकमलङ्कारः ॥३१॥

नन्वस्तु भगवच्चरितवर्णनस्य परमाशागोचरत्वम्, अथापि ब्रह्मादीनामप्य-[1]वाङ्मनसगोचराणामनन्तानन्तगुणानां कथं भवदुपवर्ण्यत्वं संभवेदित्यत आह—

**हरेरपारे गुणवारिराशौ कणं [2]गृणन्तोऽपि वयं कृतार्थाः ।**
**पृषन्ति सिन्धोः पयसां[3] कियन्ति घना [4]गृहीत्वा हि घना भवन्ति ॥**

[1] The original has अवाचमनस but it is probably a scribal error.

[2] A. पिबन्तो. [3] G. पयसा. [4] G. गृहीत्वाति घनाः.

हरेरिति—वयं मादृशाः। "जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्" इति जात्यभिप्रायेण बहुवचनप्रयोगः; मन्मुखा ब्रह्मादयः सर्वेपि कवय इत्यर्थः। निखिलगुणकीर्तनाशक्तिः सर्वसाधारण्येवेति भावः, तेन नात्मस्तुतिशङ्का। अपारे पाररहिते वाङ्मनसयोरविषय इति यावत्। तेन प्रसिद्धसागरा द्व्यतिरेको व्यज्यते। हरेः श्रीकृष्णस्य गुणा एव वारीणि, तेषां राशौ उदधौ अपरिमेयगुणराशावित्यर्थः। कणं लेशं गृणन्तः उदीरयन्तोऽपि। पिबन्तो वेति पाठेप्ययमेवार्थः। कृतार्थाः कृतकृत्याः जन्मसाफल्यं प्राप्ता इति भावः। भवेमेति शेषः। अस्माभिः स्वस्वबुध्यनुसारेण यावत् स्वशक्तितो वर्ण्यमानत्वेऽपि तदीयकल्याणगुणराशिकोटिकोट्यंशोपि वर्णितो न भवेद्थापि यत्किञ्चित् गुणकथनमेवास्माकं संपूर्णश्रेयस्साधनपर्याप्तं भवतीति भावः। अमुमेवार्थं दृष्टान्तेन साधयति। हि यस्मात् घना जलधराः सिन्धोः सागरात् कियन्ति कतिपयानि पयसां उदकानां पृषन्ति कणानेवेत्यर्थः। गृहीत्वा पीत्वेत्यर्थः। घनाः सान्द्राः स्वाभीष्टसाधनक्षमसलिलसंपन्ना इति भावः। "घनं निरन्तरं सान्द्रम्" इत्यमरः। भवन्ति जायन्ते। भवतेः कर्तरि लट्। अद्यापि तादृशतया दृश्यन्त एवेति भावः। अपरिमेयवारिराशेरल्पतरवारिसंग्रहमात्रेणापि वारिदास्तेनैव निखिलजगदाप्लावनपर्याप्ताः क्रमात् स्वोत्सृष्टसलिलपूरोत्कूलितातिविकटतटिनीकोटिभिः सागरस्यापि पूरका भवन्तीति दृष्टमेव। एवमहमपि यत्किञ्चित् भगवद्गुणकथनप्रभावादवाप्तनिखिलकामः सकलजगदुपलालितो भगवद्विषयविनियोजितनिजविद्याविलासश्च भवेयमेवेति भावः। अत्र कविघनयोरिव हरिसागरयोर्गुणवारिणोर्गृणनग्रहणयोश्च विम्बप्रतिबिम्बभावो दृष्टान्तालङ्कारः। न च हेतुबोधकहिशब्देन समर्थनसापेक्षार्थसमर्थनरूपतया काव्यलिङ्गमेवेति वाच्यम्। काव्यलिङ्गस्यार्थान्तरन्यासस्य च दृष्टान्तप्रतिवस्तूपमाभ्यां विविक्तविषयतया दृष्टान्तप्रतिवस्तूपमयोश्च सर्वत्र समर्थनरूपतया काव्यलिङ्गार्थान्तरन्याससंकलिततया "सावकाशनिरवकाशयोर्मध्ये निरवकाशं बलीयः" इति न्यायेन दृष्टान्तप्रतिवस्तूपमयोरेव बलवत्तया निरवकाशस्यैव दृष्टान्तस्यैवेह वक्तव्यत्वादित्यलं प्रसक्तानुप्रसक्तिकया॥ ३२॥

नन्वस्तु भगवद्गुणवर्णनं नामसंकीर्तनवत् सुकृतसाधनम्; तावतास्य ग्रन्थस्य न हि सर्वोपादेयतापि स्यात्। सा पुनश्चमत्कृतार्थकल्पनायामेव स्यात्। तया

पुनः पूर्वतनकविगोचरतामनापन्नया तदतिशायिन्या भवितव्यमन्यथा चर्वितचर्वणरूपतया अलंबुध्या च सहृदयहृदयाह्लादः प्रेक्षावतां प्रवृत्तिश्च न भवेदेव सर्वपूर्वकविभिरनुद्भावितस्तदतिशायी चेहत्योऽर्थ इत्येतदप्यसंभावितमेव पूर्वेषां कालिदासादीनां सर्वज्ञत्वादानन्त्याच्चेत्याशङ्कां मनसि निधाय सर्वपूर्वकविचर्वणागोचरस्तदतिशाय्येवार्थ इह निबध्यत इति सदृष्टान्तमाह—

**क्षुण्णेऽपिसाहित्यपथे कवीन्द्रैः पुण्येन जायेत नवार्थसृष्टिः ।**
**किं पद्मनाभाहृतकौस्तुभेऽपि चिन्तामणिस्सिन्धुपतौ न जातः ॥**

**क्षुण्ण इति**—साहित्यपथे सारस्वतमार्गे। "ऋक्पूरब्धूः पथामानक्षे" इत्यप्रत्ययः। कवीन्द्रैः कविश्रेष्ठैः क्षुण्णे मृदिते सत्यपि; मृदितत्वं च साहित्यपदव्या बहुतरजनपदनिरन्तरनिक्षेपनिर्मृष्टतृणगुल्मादितया विस्तरीभूततया च सर्वेषां सुखवेद्यत्ववत् सारस्वतमर्मसर्वस्वोद्घाटनेन सर्ववेद्यत्वम्, तस्य चार्थस्य पूर्वैरेव निर्व्यूढत्वादिति भावः। पुण्येन सुचरितेन पूर्वार्जितसुकृतपरिपाकेन मदीयेनेति भावः। तेन स्वस्य पूर्वातिशायिप्रतिभादिमत्तया गर्वातिशयो निरस्यते। नवा नूतना अन्यैरनाघ्रातपूर्वेति भावः। अर्थस्य उत्प्रेक्षादिविषयस्य सृष्टिः कल्पना जायेत संपद्येत संपत्स्यत एवेत्यर्थः। तेनात्रत्यस्य सर्वस्यार्थस्यादृष्टचरतया नानुपादेयत्वसंभावना भवेदिति व्यज्यते। तर्हि वाल्मीकिकालिदासादीनामल्पज्ञत्वं प्रसज्येतेत्यमुमर्थं दृष्टान्तेन समर्थयन्नाह। किमिति पद्मं नाभौ यस्य तेन तेन च क्षीरोदशयनावस्था व्यज्यते। तेन च तत्रत्यसारासारसकलवस्तुविवेचकत्वसर्वस्वतन्त्रत्वादयो व्यज्यन्ते। तादृशेन भगवता आहृतः स्वयमेव परिगृहीतः न तु केनचिद्दत्तोऽनुमतो वा। कौस्तुभः कौस्तुभाख्यः सर्वातिशायी मणिविशेषः यस्मात्तादृशेऽपि सारांशग्रहणेन निस्सारीकृततयावभासमानेऽपीति भावः। सिन्धुपतौ क्षीरसागरे। चिन्तामणिः चिन्तापूरको मणिः। शाकपार्थिवादित्वात्समासः। [1]जनपरिचिन्तनमात्रादेव सकलाभीष्टप्रदत्वेन प्रख्यात इति भावः। तेन प्रकाशमात्रफलकात् कौस्तुभादाधिक्यं व्यज्यते। न जातः किं नाजनिष्टकिम्।

[1] The manuscript has अर्थं before जनपरिचित etc., but it seems to be a mistake.

उपजायतैवेत्यर्थः, इन्द्रेणापि समासादित इति भावः। ततश्च सारस्वतसर्वमर्मवेदिना सकलदेवदैत्याद्यनुल्लङ्घनीयशासनेन सकलसप्तकोट्यप्सरस्संघादप्यतिशायिन्या श्रियः संग्रहेण पारिजातसारतरवस्तूपसंग्रहाभिलाषेण भगवतापि परिगृहीतात् कौस्तुभादत्यन्तातिशयितश्चिन्तामणिरिन्द्रकृतसुचरितपरिपाकेनैवोदभवत्। न पुनर्भगवतोऽप्यतिशयितप्राभववता मघवता लब्धः। एवं मत्कृतसुकृतपरिपाकवशात् पूर्वतनाशेषकविमनीषाविषयोऽप्यर्थः संपत्स्यत एव। यदि त्विन्द्रकृते भगवता कृपावशादवशेषितश्चिन्तामणिः स्यात्तर्हि मत्कृतेप्यद्भुता च परिकल्पनापूर्वैरवशेषिता किं न स्यादिति भावः। अत्र वाक्यद्वये जायेत जात इति सामान्यधर्मस्य द्विरुपादानात् प्रतिवस्तूपमालङ्कारः। "सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः। इवादेरनुपादाने प्रतिवस्तूपमा मता॥" इति लक्षणात्॥ ३३॥

अथानुबन्धचतुष्टयवत् देशकालप्रतिपत्तेरपि प्रेक्षावत्प्रवृत्तिनिमित्ततया केवलायास्तस्याश्चमत्कृत्यजनकतया तादात्विके राजन्यभिहिते देशकालप्रतीतिः सुलभेति प्रकृतप्रबन्धरचनाकालिकं राजानं पित्रादिक्रमेण प्रपञ्चयति—

**आसीदशेषाहितभूमिपालशासी शुनासीरसमप्रभावः।**
**तिम्मावनीनायक[1]वर्यमाम्बाजन्मासुधर्मा [2]चिनचेव्वभूपः॥ ३४॥**

आसीदिति—अशेषान् निखिलान् [आहित] भूमिपालान् [शत्रु] पार्थिवान् शास्ति निगृह्णातीति तादृशः शुनासीरस्य इन्द्रस्य प्रभावेन समः तुल्यः प्रभावः ऐश्वर्यं यस्य सः तादृशः। सप्तम्युपमानपूर्वपदस्यबहुव्रीहिः। "वाच्यो वा चोत्तरपदलोपश्च" इति वार्तिकात् शुनासीरपदोत्तरोपमानवाचकप्रभावपदलोपः। "वृद्धश्रवाश्शुनासीरः" इत्यमरः। तिम्मावनीनायकस्तिम्माभिधानो राजा। वर्यमाम्बानाम तन्महिषी ताभ्यां जन्म उत्पत्तिः यस्य स तादृशः। तेन राजपरंपराजातत्वं व्यज्यते। सु शोभनः सर्वजनाशंसनीय इति यावत्, धर्मः प्रजापालनादिर्यस्य। "धर्मादनिच् केवलात्" इति धर्मशब्दान्तस्य बहुव्रीहेरनिजादेशे सुधर्मा। नाम्नायं चिनचेव्वभूपः चिनचेव्वाख्यो राजा आसीत्। अस्तेर्लङ्। उपमालङ्कारः वृत्त्यनुप्रासेन संसृष्टिः॥ ३४॥

[1] G. वैय्यमा. [2] G., A. चिनचेप्पभूपः।

अथ तमेव द्वाभ्यां यत्तद्भ्यामेकान्वयेनाह—

**यस्य त्रिलोकीमणिहारयष्ट्या[1] मध्ये महानायकभावभाजः ।**
**कदापि न त्रासकथेति युक्तमत्यद्भुता यातरलत्वशैली ॥ ३५ ॥**

यस्येति—त्रिलोकी त्रैलोक्यमेव मणिमयी रत्नमयी हारयष्टिः एकावलं नाम हारवरः । तस्याः मध्ये मध्यभागे महानायकभावं सर्वाधिपत्यम् । अन्यत्र हारमध्यमणित्वम् । "मध्यरत्ने नेतरि नायकः" इत्यमरः[2] । भजति प्राप्नोतीति तादृशस्य यस्य चिनचेव्वभूपस्य तथाविधस्य रत्नवर्यस्य च त्रासकथा भीतिवार्ता । अन्यत्र त्रासाख्यरत्नदोषप्रस्तावः । न नास्ति इति एवंरूपजनवचनमित्यर्थः । युक्तं अनुरूपं सर्वाभ्युपगमनीयमिति भावः । त्रैलोक्याधिपत्यधूर्वहस्य कस्माच्चिद्भीतेः दोषलेशविकलस्यैव हारमध्यमणित्वस्य सर्वसिद्धत्वे तथाविधस्य दोषप्रसक्तेश्च दूरापास्तत्वान्नेदं चित्रमिति भावः । या प्रसिद्धा सांप्रतं सर्वजनविदितेत्यर्थः । अतरलत्वशैली विषयलोलताविहीनत्वस्वभावः । अन्यत्र हारमध्यमणिभिन्नत्वस्वभावः । "तरळो हारमध्यगः" इत्यमरः । अत्यद्भुता अत्यन्तविस्मयकारिणी नायकमणित्वभाज एव न तथाविधत्वमिति विरुद्धमिति भावः । राजपक्षे त्रिलोकाधिपत्यभाजो विषयचापलताराहित्यं तु युक्तमेवेति भावः । यत्तदोर्नित्यसम्बन्धात् स इत्यध्याहार्यम् । स आसीदिति पूर्वेणान्वयः । पादत्रयार्थे समालंकारः । "समं स्याद्वर्णनं यत्र द्वयोरप्यनुरूपयोः" इति लक्षणात् । तुर्यपादे नायकमणिपक्षे प्रसक्तस्य विरोधस्य राजपक्षे परिहाराद्विरोधाभासः । "आभासत्वे विरोधस्य विरोधाभास इष्यते" इति लक्षणात् । द्वयोरेकान्वयितया संसृष्टिः ॥ ३९ ॥

**यत्नं विना यस्य यशोपदेशसुधानुलिप्ते सुरनाथसौधे ।**
**प्रायः प्रवालद्रवलेपभङ्गीं प्रतापभूमा [3]प्रचुरीकरोति ॥ ३६ ॥**

यत्नमिति—सुरनाथस्य इन्द्रस्य सौधे वैजयन्ताख्ये प्रासादे यत्नं विना प्रयासमन्तरा शर्करासंपादनतदुत्तापनादिश्रमलेशमन्तरेणेति भावः । यस्य राज्ञः

[1] G. यष्ट्यां.

[2] In the printed editions of the Amarakos'a this extract is not to be traced.

[3] G. प्रकटी.

यशः कीर्तिरित्यपदेशः कपटो यस्यास्तादृश्या सुधया सिताद्रवेण अनुलिप्ते प्रतिपदविलिप्ते सति लाक्षाद्रवावकाशमन्तरा परिहृत्य लेपिते सतीति भावः। वैजयन्तसौधतया सुधालाक्षालेपावश्यंभावे तस्याभौमतया स्वतस्तयोरसंभवात् निखिलभूवलयमभिव्याप्योर्ध्वमभिप्रसरता यदीययशसा सुधालेपे निर्व्यूढे लाक्षालेपपरिशिष्ट इति भावः। प्रतापस्य तेजसः भूमा प्रकर्षः यस्येत्यनुषज्यते। प्रवालद्रवेण प्रवालवर्णद्रवेण लाक्षारसेनेत्यर्थः। यद्वा संचूर्णितातिमसृणप्रवालपङ्केनेत्यर्थः। लेपस्य विलेपनस्य भङ्गीं रीतिं प्रायः प्रायेण अन्तरान्तरेति भावः। प्रचुरीकरोति विस्तारीकुरुते। प्रवालद्रवलेपबुद्धिं जनयतीति भावः। "कृभ्वस्तियोगे संपद्यकर्तरि च्विः" इति अप्रचुरं प्रचुरीकरोतीत्यर्थे च्विप्रत्ययः। अन्तरा सुधालेपमभिप्रेत्य प्राय इति। यद्वा प्राय इत्युत्प्रेक्षाद्योतकः। यत्कीर्तिप्रतापाभ्यां इन्द्रप्रासादो निर्वर्तितसुधालाक्षालेपकर्मा भवतीत्युक्त्या लोकत्रयविख्यातत्वं राज्ञः प्रतीयते। अत्र यद्यपि यशःप्रतापयोरन्तरान्तरासन्निवेशप्रतीत्या किंचिन्न्यूनता प्रतीयते, तथापि यशःपराक्रमयोर्महच्चरितानुवर्णनरूपत्वं विशेषेण वर्ण्यमानस्य विश्राणनेष्टापूर्तादिरूपत्वे यशस्त्वेन शौर्यशत्रुनिग्रहादिरूपत्वे तेजस्त्वेन तच्चरितानुवृत्तेर्न दोष इति मन्तव्यम। यद्वा क्वचित्प्रासादादौ लौहित्यविन्यासस्यैव कर्तव्यत्वेऽपि प्रथमं सुधालेपतदुन्मार्जनमसृणीकरणादिना धवळीकरणस्याप्यावश्यकतया तद्वदिह सर्वांश एव यशसो व्यापनमनुमतमेव। प्रतापव्यापनमित्यर्थे न कोऽपि दोषः। अत्र कीर्तौ तत्त्वमपह्नुत्य तदारोपितसुधालेपानुपदप्रवृत्तत्वनिमित्तेन प्रतापव्यापने प्रवालद्रवालेपनतादात्म्यसंभावनादपह्नुतिगर्भस्वरूपोत्प्रेक्षा सुधानुलिप्त इति निमित्तोपादानेन प्रायःपदेन भङ्गीमिति तत्तादात्म्यारोपेण[1] च प्रतीयते ॥ ३६ ॥

अथ तत्सुतमच्युतभूपं दशभिः प्रपञ्चयति—

**[2]अजायतास्मादयमच्युतेन्द्रो मूर्त्यम्बिकायां[3] महिते मुहूर्ते ।**
**सामन्तचूडाभुवि केतकीनां सखी यदाज्ञापनचीटिकास्ते ॥ ३७ ॥**

[1] The manuscript has तादात्म्यपरेण.

[2] A. has अजायतार्थात्.

[3] G. अम्बिकाया.

**अजायंतेति**—अस्मात्पूर्वोदितात् चिनचेव्वभूपात् मूर्त्यम्बिकायां मूर्तिनाम्न्यां महिष्याम्। महिते श्लाघनीये चक्रवर्तिजननस्वरूपयोग्ये। मुहूर्ते लग्ने। अयं प्रसिद्धः। अयमिति प्रत्यक्षनिर्देशात् रघुनाथनाम्नि पुत्रे विनिहितराज्यतन्त्र इदानीं वर्तमान इति व्यज्यते। यद्वा तत्कृतदेवब्राह्मणप्रतिष्ठादीनां अद्य परिदृश्यमानतया "नरःपतितकायोपि यशःकायेन जीवति" इति न्यायेन प्रत्यक्षनिर्देशः। अच्युतेन्द्रः अच्युतनामा इन्द्रः, परमैश्वर्य इति राजाधिराज इत्यर्थः। यद्वा अच्युत इन्द्र इवेति इन्द्रतुल्यप्रभाव इत्यर्थः। अजायत अभवत्। "जनी प्रादुर्भावे" इति धातोर्लङ्। यस्य अच्युतभूपस्य आज्ञापनचीटिकाशासनलेखः भिदेशाक्षरयुक्ता चीटीति भावः। सामन्तानां सपत्नानां राज्ञामित्यर्थः। चूडाभुवि मकुटदेशे। केतकीनां विलासार्थविच्छुरितकैतकदलानां सखी सहचरी तथाविधया केतक्या सह किरीटप्रान्ते भक्तिभारेण निक्षिप्तेति स्थानतो वर्णतः परिमाणेन च केतकीसदृक्षेति भावः। तेनास्य सामन्तानां च महिमातिशये महदन्तरमिति व्यज्यते। अत्र सखीति निर्देशेन सादृश्यस्यार्थात् प्रतीत्या आर्थी उपमा॥ ३७॥

**यशःपयोभिर्भरिताद्यदीयैर्ब्रह्माण्डभाण्डाद्बहिरुल्लसद्भिः।**
**प्रायेण तादृक्षभुजप्रतापैर्बोभूयते भूरिनवप्रवालैः॥ ३८॥**

**यश इति**—यदीयैः अच्युतभूपसम्बन्धिभिः यशःपयोभिः कीर्तिदुग्धैः भरितात् पूरितात् ब्रह्माण्डं विध्यण्डमेव भाण्डः पात्रविशेषः तस्मात् अङ्कुरणार्थबीजसेचकपात्रादिति भावः। बहिः ऊर्ध्वं उल्लसद्भिः उद्गतैः ब्रह्माण्डमभिव्याप्य तद्बहिः प्रविसारिभिरित्यर्थः। तादृक्षस्य अनिर्वचनीयस्य निखिलशत्रुनिग्रहकारितया प्रख्यातस्येत्यर्थः। "दृशिर् प्रेक्षणे" इति धातोः "दृशेः सः" इत्यौणादिके कर्तरि सप्रत्यये "दृक्षे च" इति वार्तिकेन तच्छब्दस्याकारातिदेशे तादृक्षः। भुजप्रतापैः बाहुपराक्रमैः कर्तृभिः। भूरि अपरिमितैः नवैः नूतनैः प्रवालैः किसलयैः नवप्रवालात्मनेत्यर्थः। बोभूयते संभूयते। "भू सत्तायाम्" इति धातोः यङन्ताद्भावे लट्। तदीयभुजशौर्यरूपं बीजं तदीयौदार्यादिप्रशंसारूपेण निखिलब्रह्माण्डव्यापिना यशःपयसा समुच्छ्वसितं सदङ्कुरीभूय ततो नवप्रवालतामभ्येत्य ब्रह्माण्डाद्बहिः प्रसृतमित्यर्थः। अङ्कुरावस्थायामेवैवं

चेत्तदभिवृद्धौ कीदृशं वा भवेदिति भावः। समस्तवस्तुविषयकं सावयवरूपकमलंकारः ॥ ३८ ॥

**सत्रावतीर्णेषु [1]यदाश्रितानां सुत्राममुख्येषु सुधाशनेषु ।**
**युद्धाहतैर्यः प्रतियोधियोधैश्चक्रे पुरीं शातमखीमशून्याम् ॥ ३९ ॥**

**सत्रेति**—सुत्राममुख्येषु महेन्द्रप्रमुखेषु सुधाशनेषु देवेषु यदाश्रितानां अच्युतभूपालमाश्रितवतां राजप्रसादसमासादितानवधिकविभवशालितया अनवरताग्निष्टोमादिषु शक्रादीनमरानाहूय प्रत्यक्षहविर्भागं प्रदिशतामिति भावः। सत्राय यज्ञाय [2]यज्ञीयहविराहरणायेति यावत्। "सत्रं यज्ञे यज्ञभेदे" इति रत्नमाला। अवतीर्णेषु अवरूढेषु सत्सु स्वर्गाद्भुवमिति भावः। ब्राह्मणानामानन्त्येन क्रतूनां चानवरतप्रवर्तमानतया हविर्ग्रहणाय भुवमवतीर्णानां स्वर्गगमनप्रत्यावर्तनावकाशलाभाभावेन देवेषु सदा भुवि स्थितेषु स्वर्गशून्यत्वे प्रसक्ते सतीति भावः। यः अच्युतभूपः शातमखीं इन्द्रसम्बन्धिनीं पुरीं अमरावतीमित्यर्थः। युद्धे संयुगे आहतैः निहतैः प्रतियोधिनां प्रत्यर्थिनां योधैः। ये युध्यमानास्त एव तेन हन्यन्ते, न पुनः पलायिताः प्रह्वावेति महाधार्मिकत्वं व्यज्यते। अशून्यां परिपूर्णां निबिडामिति भावः। चक्रे विदधे। करोतेरात्मने पदे लिट्। अत्र स्वर्गे देवसामान्यशून्यत्वस्यायोगे योगवर्णनादतिशयोक्तिः। तदपाकरणार्थकत्वस्य प्रतियोधियोधहनने प्रतीत्या सिद्धविषया फलोत्प्रेक्षा व्यंजकाभावात् गूढा ॥ ३९ ॥

**आलङ्कमाशङ्करधाम यस्मिन् दिने दिनेऽन्नं दिशति प्रजाभ्यः ।**
**जगत्प्रजारक्षणजागरूका देवी दधौ चिह्नतयैव दर्वीम् ॥ ४० ॥**

**आलङ्कमिति**—यस्मिन् अच्युतभूपे आलङ्कं लङ्कामारभ्य आशङ्करधाम कैलासपर्यन्तं आसेतुहिमाचलं भारतवर्षमात्र इति यावत्। अन्यत्र क्षुत्तृष्णाभावादिति भावः। "आङ् मर्यादाभिविध्योः" इत्यव्ययीभावे "अव्ययीभावश्च" इति नपुंसकत्वे "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति ह्रस्वः। दिनेदिने प्रतिदिनं प्रजाभ्यः प्राणिभ्यः अन्नं भोज्यवस्तुजातं दिशति ददति सति, पालकान्तरापेक्षाभावे

[1] G., A'. सदा बुधानां.

[2] A. याज्ञीय.

सतीति भावः। जगति भुवने प्रजानां पालने रक्षणे विषये जागरूका निर्निद्रा अनवरतान्नदानेन सर्वप्रजापालनार्थं कृतावतारेत्यर्थः। देवी अन्नपूर्णाभिधाना गौरी। चिह्नतयैव लाञ्छनरूपतयैवं मूर्त्यन्तरभेदग्रहणसाधनत्वेनैव न पुनरन्तः [न्न] परिवेषणसाधनतयेत्यर्थः, तस्यान्यतो लब्धत्वादिति भावः। दर्वीं परिवेषणसाधनजा [ज्या ?] भिधानपात्रविशेषं दधौ बभार। दधातेः परस्मैपदे लिट्। अत्र यद्यपि निखिलभुवनरक्षादीक्षिताया देव्या भारतवर्षमात्ररक्षकान्तरसंभवमात्रेण न स्वव्यापारवैकल्यं संभवति। तथापि क्षुदभिभूतभारतवर्षमात्र एवान्नस्य दातव्यतया तस्यान्यतः सिद्धौ देव्याः कर्तव्याभावो युज्यत एव। अत एव दर्वीमात्रस्यैव चिह्नत्वमापादितम्। न पुनरन्यस्य पाशाङ्कुशादेरत्र निरन्तरान्नदाननिरते भूपतौ देव्या दर्वीधार [ण] स्य चिह्नरूपतया व्यक्तिभेदग्रहमात्रफलकत्वप्रतीत्या फलोत्प्रेक्षा सापह्नवा। व्यञ्जकाभावात् गूढा। राज्ञ एवान्नपूर्णा कार्यधूर्वहत्वेन देव्यां कैमर्थ्यव्यञ्जनात् प्रतीपालंकारो व्यज्यते ॥ ४० ॥

**महान्ति दानानि महीसुराणां कुर्वन्नखर्वाशयमानुपूर्व्यात्।**
**श्रीरामसेतावनुहायनं यस्सिन्धौ शिवायावभृथं व्यधत्त ॥ ४१ ॥**

**महान्तीति**—यः अच्युतभूपः अखर्वः दीर्घः अकुण्ठित इति यावत्। आशयः अभिप्रायः, निरन्तरदाने उत्कटेच्छेति भावः, यस्मिन् कर्मणि। तथा महीसुराणां ब्राह्मणानां, सम्बन्धसामान्ये षष्ठीविधानात्। संप्रदानत्वविवक्षया ब्राह्मणेभ्य इति यावत्। महान्ति महाद्रव्यसाध्यतया महद्भ्यः प्रदेयतया महद्भिः कर्तव्यतया महाफलकतया च उत्कृष्टानि दानानि तिलपर्वतादिषोडशविधतया तदन्यविध [त] या च स्मृत्यादिचोदितकल्पानुसारेण प्रसिद्धानि। आनुपूर्व्यात् विहित क्रमानुसारेण। कुर्वन् निर्वर्तयन् सन्नेव श्रीरामसेतौ दाशरथिनिबद्धसेतुमध्ये शिवाय श्रीराघवप्रतिष्ठापितलिङ्गे कृताविष्करणाय महेशाय रामनाथायेत्यर्थः। अनुहायनं प्रतिसंवत्सरम्। सिन्धौ सागरे। अवभृथं उत्सवान्ताभिषवम्। व्यधत्त अन्तर्भावितणिजन्ततया अकारयदित्यर्थः। सकृन्महादानानि संकल्प्य प्रतिवर्षं सेतुं गत्वा महादेवस्य महोत्सवमुपक्रम्य तदन्तरा महादानेष्वेकैकमभिनिर्वर्त्यावभृथमारचय्य स्वयमुभयविधमभिषवमकरोदिति भावः। प्रतिवर्षमेकैकं महादानमारचय्य तदङ्ग-

तया शिवाय मङ्गळाय दोषापाकृतये श्रीरामसेतौ सिन्धौ अवभृथं स्नानं व्यधत्तेति केचित् ॥ ४१ ॥

**दिनेदिने दीनकृतानुकम्पो दीनारजातानि दिशन्भृशं यः ।**
**ग्रामान्गुणग्रामनिकामरामान्पारेसहस्रं प्रददौ बुधेभ्यः ॥ ४२ ॥**

दिनेदिन इति—दीनेषु दरिद्रेषु विषये कृता विहिता अनुकम्पा दया येन तादृशः यः अच्युतभूपः दिनेदिने प्रतिदिवसं अविच्छेदेनेत्यर्थः । बुधेभ्यः पण्डितेभ्यः, ज्ञानवत्तया दानपात्रभूतेभ्य इति भावः । दीनाराणां निष्काणां जातानि निचयान् । भृशं अतिशयितं यथातथा, अर्थिनामाशंसितादप्यधिकतयेति भावः । दिशन् वितरन् सन्, तत्तत्कुटुम्बोपलालनपर्याप्तादधिकं दिशन्नपीति भावः । गुणानां अनूषरत्वमधुरोदकत्वादीनां क्षेत्रगुणानां ग्रामैः सन्दोहैः निकामं अत्यन्तं रामान् रमणीयान् । गुणवत्तया निर्दुष्टतया सर्वजनाशंसनीयानिति भावः । पारेसहस्रं सहस्राधिकसंख्याकान् । "पारे मध्ये षष्ठ्या वा" इति सूत्रेणाव्ययीभावः । पूर्वपदस्यैदन्तत्वं तु निपातनादवसेयम् । ग्रामान् बीजावपनसस्यारोपणार्हक्षेत्रमालोपलक्षितान् विषयान् प्रददौ दत्तवान् । प्रपूर्वाद्ददातेर्लिट् । दैनन्दिनदानसंवर्धिताशेषविबुधवर्गोपि शाश्वतब्रह्मप्रतिष्ठासिद्ध्ये पूर्वोक्तमहादानव्यतिरेकेणापि अनेकसहस्रसंख्यान् ग्रामानेव ब्राह्मणेभ्यः प्रत्येकमदादिति भावः । उदात्तालंकारः "उदात्तमृद्धिचरितं श्लाघ्यं वान्योपलक्षणम्" इति लक्षणात् । अनुप्रासेन संसृष्टिः ॥ ४२ ॥

**भूषामशेषां भुवनैकमूल्यां भद्रासनं भव्यमणिप्रणीतम् ।**
**ग्रामाननेकानपि गाढभक्तिश्श्रीरङ्गधाम्नेऽदित यो महिम्ने ॥ ४३ ॥**

भूषामिति—यः अच्युतभूपः । गाढा दृढा अनन्यविषया अविच्छिन्ना चेति यावत् । भक्तिः देवविषयिणी अभिरतिः प्रकरणात् रङ्गनाथविषयिणीति लभ्यते । यस्य तादृशस्सन् श्रीरङ्गधाम्ने श्रीमत् रङ्गं रङ्गाख्यं नगरं श्रिया लक्ष्म्या विहारस्थानतया । श्रीरङ्गाख्यं वा धाम स्थानं यस्य तस्मै, श्रीरङ्गक्षेत्रे शेषशयन-

मधिशयानायेत्यर्थः । महिम्ने ज्योतिषे रङ्गनाथाय भुवनं जगत् एकं केवलं मूल्यं पणः यस्यास्तादृशीं एकैकस्य भूषणस्याखिलमपि भुवनं मिलितं यदि तदा कथंचिन्मूल्यं भवितुमर्हति न पुनर्जगद्गतमन्यदस्य मूल्यं भविष्यतीति भावः । अशेषां निरवशेषां पादुकादिकिरीटान्तेषु न किंचिद्दत्तमवशिष्यत इति भावः । भूषां भूषणम् । तथा भव्यैः मङ्गलप्रदैः दोषलेशविवर्जितैरिति भावः मणिभिः पद्मरागादिभिः प्रणीतं परिकल्पितं भद्रासनं सपर्यासनं सिंहाङ्कासनमिति भावः । तथा अनेकान् बहुविधान् ग्रामान् भगवन्निवेदनोपयुक्तधान्याद्युत्पादकक्षेत्रमण्डितां भुवमिति भावः । अदित प्रादात् । "डु दाञ् दाने" इति धातोरात्मने पदे लुङ् । अनुप्रासेन संसृष्ट उदात्तालंकारः ॥ ४३ ॥

**मायूरमध्यार्जुनकुम्भघोणश्रीदक्षिणावर्तमुखस्थलेषु ।**
**वृद्धाचले पञ्चनदे च सेतौ सोपानसौधानतनिष्ट यो वा ॥ ४४ ॥**

**मायूरेति**—यो वा । वाकार एवकारार्थकः । यः अच्युतभूप एवेत्यर्थः । मायूरं मयूररूपया गौर्या पूजनं यत्र तादृशं क्षेत्रम्, मध्यार्जुनं हरिहरमध्यवर्त्यर्जुनवृक्षोपलक्षितम्, कुम्भघोणं शरनिर्भिण्णसुधाकुम्भघोणास्थानविनिस्सृतसुधाप्लावितम्, श्रीमत् दक्षिणावर्तं प्रदक्षिणपरिवर्तितावर्ताकारगह्वरोपलक्षितं क्षेत्रं चेत्येतानि मुखानि अग्रिमाणि येषां तेषु स्थलेषु भगवदाविर्भावस्थानेषु । तथा वृद्धाचले वृद्धकाश्यां, पञ्चनदे कावेरीवृषरोमन्थफेनादिपञ्चनद्युपलक्षिते जप्येश्वरक्षेत्रे, सेतौ श्रीरामकृतसमुद्रसेतौ च । सोपानसौधान् सोपानैरारोहावरोहक्षमगोपुरप्रासादान् । अतनिष्ट व्यतानीत् । तनोतेरात्मनेपदे लुङ् । स एवेति पूर्वेणान्वयः । तादृशस्य राज्ञ इदानीमभावेऽपि तत्कृतानाममीषां सौधानामद्यापि प्रत्यक्षतया तत्कर्तृत्वेन सर्वबुद्धिगोचरो यः स एवेति प्रत्यभिज्ञायते । श्लाघ्यचरितनिबन्धनादुदात्तालङ्कारः ॥ ४४ ॥

**चिदम्बरे चित्परिणामभेदे वैकुण्ठवीप्साजुषि वेङ्कटाद्रौ ।**
**श्रीकालहस्त्यादिषु चातनोद्यो वृषाकपायीवरयोस्सपर्याम् ॥ ४५ ॥**

चिदिति—चितः ज्ञानस्य परिणामभेदे आकारविशेषे चिन्मयत्वेन पुराणादिप्रपञ्चित इति भावः । चिदम्बरे पुण्डरीकक्षेत्रे । तथा वैकुण्ठस्य अप्राकृतस्य विष्णुस्थानस्य वीप्सां पुनरुक्तिं जुषति प्राप्नोतीति तादृशे वेङ्कटाद्रौ शेषाचले वैकुण्ठादभिन्न इति भावः । तथा श्रीमत्सु महामहिमवत्सु कालहस्ती दक्षिणकैलासः आदिर्येषां तेषु स्थानेषु च वृषाकपाय्योः श्रीगौर्योः वरयोः नायकयोः हरिहरयोरित्यर्थः । "वृषाकपाय्यौ श्रीगौर्यौ, हरविष्णू वृषा कपी" इति चामरः[1] । "वृषाकप्यग्निकुसितकुसिदानामुदात्तः" इति सूत्रेण ङीप् । तत्सन्नियोगशिष्टत्वादैकारादेशश्च । यद्यप्यत्रान्योन्याश्रयः प्रतिभाति तथापि सपर्योद्देश्यत्वं नकेवलहरिहरयोः किन्तु श्रीगौर्योरपीति ध्वननार्थकतया न दोष इति मन्तव्यम् । सपर्या पूजां "सपर्यार्चार्हणास्समाः" इत्यमरः । अतनोत् विस्तरेणाकार्षीदित्यर्थः ॥ ४५ ॥

**सौन्दर्यसङ्केतनिकेतभूतास्सारस्य सर्वस्वनिधानसीमाः[2] ।**
**सौभाग्यसारास्सुदृशां[3] सहस्रं भुवोऽधिविन्ना विदधेतमां यः ॥४६॥**

सौन्दर्येति—यः अच्युतभूपः सौन्दर्यस्य रूपस्य अङ्गप्रत्यङ्गसौष्ठवस्येत्यर्थः । सङ्केतस्य सर्वैरस्माभिरिहैवावस्थेयमिति समयबन्धस्य निकेतभूताः सर्वाङ्गसुन्दर्य इति भावः । सारस्य सरसभावस्य, रसज्ञताया इति यावत् । यत् सर्वस्वं निखिलसारतरांशस्तस्य निधानसीमा निक्षेपस्थानभूताः । तथा सौभाग्यस्य लावण्यस्य मुक्ताफलादिवत् देहप्रभातारळ्यस्य साराः श्लाघ्यांशभूताः, लावण्यसार एव नारीरूपेण परिणता इत्यर्थः । लावण्यमेव सारो बलं यासामिति वा । तादृश्यः सुदृशां योषितां सहस्रं सहस्रसंख्याका योषित इत्यर्थः । सुदृशः सहस्रमिति पाठेप्ययमेवार्थः । भुवः भूमेः अधिविन्नाः सपत्न्यः विदधेतमां समतनोत् । सहस्रं योषितः भुवः सपत्नीत्वेन स्वयं परिगृहीतवानित्यर्थः ।

[1] The original reads स्मृतेः in the place of अमरः.

[2] G. निकेतसीमाः.

[3] A., A[1]., G. सुदृशः and the commentator also notes this reading.

विपूर्वाद्दधातेः लिटि अतिशयार्थतमप्प्रत्यये "किमेत्तिङव्यये" इति तमबन्तादां-प्रत्यये विदधेतमाम्। निरवयवं मालारूपकमलङ्कारः ॥ ४६ ॥

**मूर्त्यम्बिकायामजनिष्ट तस्माद्रतीशरूपो रघुनाथभूपः ।**
**अत्युक्तिरत्यद्भुतपुण्यवृत्तौ यत्र स्वभावोक्तियशोऽपि नैति ॥ ४७ ॥**

**मूर्तीति**—तस्मात्पूर्वोक्तादच्युतभूपात् मूर्त्यम्बिकायां मूर्तिनाम्न्यां महिष्यां रतीशस्य मदनस्येव रमणीयं रूपं यस्य तादृशः रघुनाथनामा भूपः अजनिष्ट उदभूत्। "जनी प्रादुर्भावे" इति धातोरात्मने पदे लुङ्। अत्यद्भुता अतिविस्मय-कारिणी निखिलातिशायिनीत्यर्थः। पुण्या पावनी वृत्तिः वर्तनं चरितमित्यर्थः। यस्य तादृशे यत्र रघुनाथभूपे विषये प्रयुज्यमानेति भावः। अत्युक्तिः तत्तत्स्वरूपयोग्यतामतिशयाना उक्तिः कथनं श्लाघारूपेणासंभावितमिथ्यावाद-इत्यर्थः। सैवात्युक्तिर्नामालंकारः। "अत्युक्तिरद्भुता तथ्या शौर्यौदार्यादिवर्णनम्" इति लक्षणात्। सापीत्यर्थः। स्वभावोक्तेः तत्तत्स्वरूपयोग्यार्थकथनस्य स्वभावोक्ति-नामालंकारस्य "स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम्" इति लक्षणात्। तस्याः यशोविख्यातिमपि नैति न प्राप्नोति। उक्तविधया असंभावितमिथ्या वादोऽपि रघुनाथभूपविषये प्रयुज्यमानस्तदीयसहजचरितवर्णनस्याप्यपर्याप्ततया तदीयस्वभाववर्णनचमत्कृतिमपि न भजतीत्यर्थः। तेन तच्चरितस्य लोकाति-शायित्वं प्रतीयते। अत्युक्तिरेवालंकारः। रतीशरूप इत्युपमासंसृष्टिः ॥ ४७ ॥

**यदाश्रितानां यजने हवींषि ग्रहीतुमन्तर्गृहमागतस्य ।**
**द्वारोपकण्ठे द्विपडिम्भदंभाद्वाहा वलन्ते घनवाहनस्य ॥ ४८ ॥**

**यदिति**—यं रघुनाथभूपं आश्रितानां तदुपजीविनां ब्राह्मणानामिति भावः। यजने यज्ञे हवींषि चरुपुरोडाशादीनि ग्रहीतुं आदातुं अन्तर्गृहं सदनाभ्यन्तरं आगतस्य प्राप्तस्य घनो जलदो वाहनं यस्य तादृशस्य महेन्द्र-स्येत्यर्थः। "तुराषाण्मेघवाहनः" इत्यमरः। वाहाः मेघाः जलधरा एवेत्यर्थः। द्विपडिम्भाः करिकलभा इति दम्भात् कपटात् द्वारस्य प्रतीहारस्योपकण्ठे प्रान्तभागे प्रकरणात्तदाहृतानामित्यर्थः। [1]वलन्ते सञ्चरन्ति। सोऽजनिष्टेति पूर्वेणान्वयः।

[1] The original has बलवन्तो but it makes no sense.

"वल संचलने" इति धातोरात्मने पदे लट्। अत्र रघुनाथभूपपरिपालितविद्वद्गृहं [ह] द्वारनिबद्धमतङ्गजेषु तथात्वं दम्भपदेनापह्नुत्य हविरादानार्थागतान्तःप्रविष्टमघवद्विसृष्टतद्द्वारसंचलदिन्द्रवाहनीभूतमेघत्वारोपात् कैतवापह्नुतिरलंकारः। "कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुतेः पदैः" इति तल्लक्षणात्। तेन सन्ततनिबद्धगजेषु इन्द्रवाहत्वबुध्यनुरोधेन तदाश्रितयज्ञेषु सातत्यं तेषां च प्रत्यक्षहविर्ग्रहणार्हतया महामहिमत्वं राज्ञश्च निजाश्रितेषु गजान्तैश्वर्यप्रदातृत्वमित्यादयो व्यज्यन्ते ॥ ४८ ॥

**पतीन्वरीतुं प्रथने यदीये निर्जग्मुषे निर्जरयौवताय।**
**[1]मालार्पणे मन्दतया प्रयाति व्रीडाजडत्वं विटपी मघोनः ॥ ४९ ॥**

पतीनिति—मघोनः इन्द्रस्य विटपी पादपः कल्पतरुरित्यर्थः। जातावेकवचनम्, सर्वेपि कल्पतरव इति भावः। यदीये रघुनाथभूपसम्बन्धिनि तदारब्धइत्यर्थः। प्रथने युद्धे। "युद्धं प्रथनं प्रविदारणम्" इत्यमरः। पतीन् नायकान्। रघुनाथेन हतान् दिव्यदेहमवलम्ब्य स्वर्गे आगतान् भूपानिति भावः। वरीतुं गान्धर्वेण विधिना परिणेतुम्। वृणोतेस्तुमुन्प्रत्यये इडागमे "वृतो वा" इति दीर्घः। निर्जग्मुषे स्वर्गादभिप्रस्थिताय प्रस्थाय स्वेषां निकटमासाद्य प्रत्येकमेकैकां वरणमालां याचितवत इति भावः। निर्जराणां देवानां यौवताय युवतीकदम्बाय। "तस्य समूहः" इत्यधिकारे "अनुदात्तादेरञ्" इति अञ्प्रत्यये यौवतम्। "यौवतं गणः" इत्यमरः। मालार्पणे वरणस्रग्वितरणे विषये, मन्दतया रिक्ततया प्रदेयमाल्याभावादिति भावः। व्रीडया लज्जया निमित्तेन जडत्वं अचेतनतां प्रयाति प्राप्नोति। "या प्रापणे" इति धातोर्लट्। तेन तथाविधोऽद्यापि दृश्यत इति ध्वन्यते। अस्य राज्ञः शत्रुभटानामपरिमेयतया राज्ञो लघुहस्ततया च समसमयसमागतानां सर्वेषां वरणमालार्पणे मिलितानामपि सर्वेषां देवतारूपाणां तत्पर्याप्तकुसुमोद्गमाभावात् क्रमशस्तदुत्पादनावकाशाभावाच्च महावदान्यतया त्रिजगद्विख्यातस्यापि मम कुसुममालामात्रार्पणे रिक्तता संजातेति त्रपावशात् किमु निश्चेष्टा जाता लक्ष्यन्ते। कथमन्यथा लोकोत्तरमहोदारस्य तादृशतरुजन्म संभवेदिति भावः।

[1] A[1]., G. माल्यार्पणे.

अत्र वृक्षगते स्वाभाविके स्थिरत्वे लज्जाजनितस्तंभात्मताध्यवसिते वरणोद्यत-सुराङ्गनामाल्यार्पणासमर्थत्वज्ञानं न हेतुरेव हेतुतया निर्दिष्टमिति हेतूत्प्रेक्षा गूढा ॥ ४९ ॥

**भुजप्रतापस्फुरणैर्यदीयैरिदं विलीयेततमामितीव ।**
**विचिन्त्य हैमं जगदण्डभाण्डं[1] वेधाजलान्तर्विदधे सुमेधाः ॥ ५० ॥**

भुजेति—सु शोभना मेधा प्रज्ञा यस्य सः तादृशः भूतभाव्यर्थानुचिन्तनपूर्वं तदनुगुणस्वव्यापारवानिति यावत् । सुपूर्वात् "नित्यमसिच् प्रजामेधयोः" इत्यसिच् प्रत्यये सुमेधाः । सान्तोयम् । वेधाः ब्रह्मा निखिलब्रह्माण्डस्रष्टेति भावः । हैमं सुवर्णविकारं अतितापे द्रवीभावस्वरूपयोग्यमिति भावः । इदं अद्भुतत्वेनाद्यापि वर्तमानमिति भावः । जगदण्डं निखिलजगदाधारभूतं ब्रह्माण्डमेव भाण्डं भाजन-विशेषः । यदीयैः रघुनाथभूपसम्बन्धिभिः भुजप्रतापस्फुरणैः दोरूष्मप्रज्वलनैः तस्याद्यतनत्वेपि भावित्वेन ब्रह्मणा ब्रह्माण्डसृष्ट्यवसरपरिचिन्तितैरिति भावः । विलीयेततमां अत्यन्तं द्रवीभूतं भवेत् । विपूर्वात् "लीङ् श्लेषणे" इति धातोरात्मने-पदे लिङ् । अतिशायनार्थे तमप्प्रत्यय आंप्रत्ययश्च । इति एवम् । विचिन्त्येव पर्या-लोच्येव । सुवर्णस्यात्यन्तानलतापे द्रवीभवनस्वाभाव्यात् सौवर्णमिदमण्डमिह भुवि रघुनाथप्रतापेन तेजस्त्रयातिशायिना सर्वतः प्रज्वलता द्रवीभूतमेव भवेत् । तर्हि जगदेव निखिलमवसन्नं स्यात्तस्य च द्रवीभावप्रतिबन्धकद्रवद्रव्यान्तरसंस्थाने तु नैवं भवेदिति मत्वेवेति भावः । इदमिति द्वितीयान्ततयानुषज्यते । इदमीदृश ब्रह्माण्डं जलान्तः जलमध्ये महाजलौघमध्य इति यावत् । राजदन्तादिवत्समासः । विदधे विन्यस्तवान् । अत एवाद्याप्यविलीनमेव वर्तत इति भावः । अत्र ब्रह्माण्डस्य महाजलमध्यविन्यसनं प्रति कविकल्पिताया ब्रह्माण्डसर्गकालिकाया प्रकृत-राजप्रतापतपनसंभावितब्रह्माण्डनाशप्रतीकारचिन्ताया हेतुत्ववर्णनादसिद्धविषया हेतूत्प्रेक्षा । इमामेवात्युक्तिरूपतयात्युत्प्रेक्षामाहुः । हैमपदस्य सुमेधःपदस्य च उक्ताभिप्रायगर्भतया परिकराभ्यां संसृष्टिः ॥ ५० ॥

**सत्रे यदीये मृदुलान्नसेतुराज्यप्रवाहैरभितो विभिन्नः ।**
**पाकप्रकर्षात्कठिनैः पयोभिर्निबध्यते नित्यमिलानिलिम्पैः ॥ ५१ ॥**

[1] A[1]. भाण्डवेधा.

सत्र इति— यदीये रघुनाथभूपसम्बन्धिनि । तेन प्रजापालनार्थपरिकल्पित इत्यर्थः । सत्रे नित्यान्नदानशालायां अग्न्याधेयादिकस्य यज्ञस्य यावज्जीवाग्निहोत्रसंकल्पवदनवरतान्नप्रदानसंकल्पमूलतया औपचारिकः सत्रपदप्रयोगः, जातावेकवचनम्, सत्रेष्वित्यर्थः । नित्यं प्रत्यहं प्रतिभुक्तिसमयमिति यावत् । इलानिलिम्पैः भूदेवैः ब्राह्मणैः कर्तृभिः तत्तत्सत्रभोक्तृभिरिति भावः । आज्यप्रवाहैः भुक्त्यर्थपरिवेषितघृतपूरैः अभितः सर्वतः विभिन्नः विच्छिन्नः यः मृदुलैः सुकुमारैः यथोचितपाकेन विक्लित्तिविशेषवत्तयात्यन्तसुकुमारैरिति भावः । तेन प्रवाहनिरोधासमर्थत्वं प्रतीयते । तादृशैः अन्नैः ओदनैः कृतः सेतुः द्रवद्रव्यनिरोधार्थं पूर्वकृतः बन्धविशेषः । "सेतुराळौ स्त्रियां पुमान्" इत्यमरः । "आळिः सेतुस्सखीपङ्क्तिः" इति च रत्नमाला । तथाविधान्नरचिततया बलवदाज्यप्रवाहनिरोधाक्षमतया सर्वतः खण्डित इति भावः । पाकप्रकर्षात् अतिपाकान्निमित्तात् कठिनैः घनीभूतैः पयोभिः दुग्धैः सितशर्करादिमधुरतरवस्तुजालमिळितैः पिण्डीभूतैः परमान्नैरिति भावः । निबध्यते दृढीक्रियत इत्यर्थः । निपूर्वात् "बध बन्धने" इति धातोः कर्मणि आत्मनेपदे लट् । उदात्तालंकारः मृदुलकठिनपदाभ्यामुक्ताभिप्रायगर्भाभ्यामुपात्तपरिकराभ्यां संसृष्टिः ॥ ९१ ॥

**श्रीपारिजाताहरणाभिधानो येनैकरात्रेण कृतः प्रबन्धः[1] ।**
**अन्ये च वाल्मीकिचरित्रमुख्या विश्वप्रतीता विहिताः प्रबन्धाः ॥९२॥**

श्रीति—येन रघुनाथभूपेन पारिजाताहरणमिति अभिधानं नाम यस्य तादृशः । यत्किल भगवता कृष्णेन सत्यभामार्थे स्वर्गात् पारिजाताहरणमाचरितं तत्प्रपञ्चनारूपतया तन्नाम्ना प्रख्यातः द्विपदो दृश्यप्रबन्धविशेषः । एकरात्रेण एकया निशया एकस्यां रात्राववसन्नायामिति भावः । कृतः रचितः प्रतिदिनप्रबन्धनिर्मातेति भावः । तथा वाल्मीकेः प्राचेतसस्य मुनेः चरित्रं वृत्तं तत्प्रतिपादकतया तन्नामकः प्रबन्धः मुख्यं येषां ते वाल्मीकिचरित्रमुख्या विश्वस्मिन् अखिलप्रपञ्चे प्रतीताः ख्याताः । अन्ये उक्तादपरे प्रबन्धाः कृतयश्च विहिताः निर्मिताः । सः अजायतेति पूर्वेणान्वयः ॥ ९२ ॥

[1] G., A[1]. कृतो निबद्धः [न्धः]

इत्थं राजानं निर्दिश्य तदनुबद्धतया देशकालौ प्रेक्षावत्प्रवृत्तयेऽनुबन्धचतुष्टयं चोपदर्शयन् चिकीर्षितं प्रतिजानीते—

**अध्यास्य तञ्जानगरीममुष्मिन्सर्वंसहां शासति सार्वभौमे ।**
**श्रीराजचूडामणियायजूकश्चित्रं निबध्नाति हरेश्चरित्रम् ॥ ५३ ॥**

अध्यास्येति—अमुष्मिन् रघुनाथभूपे सार्वभौमे सर्वभूमीश्वरे तञ्जानगरीं तञ्जाख्यासुरविरचितत्वेन तन्नाम्ना प्रथितां नगरीं पुरीं अध्यास्य उषित्वा सर्वंसहां भूमिं शासति रक्षति सति तेन तदाधिपत्योपलक्षितः षट्शताधिकवर्षचतुस्सहस्रकलिव्यापनात्मकः कालः, तञ्जापुरीति देशश्च प्रतिपादितः। राजा चन्द्रः चूडामणिः किरीटं यस्येति चन्द्रचूडस्य प्रति निर्देशतया राज्ञां चूडामणिः किरीटं तद्वत् शिरसोपलालित इत्यर्थः। राजचूडामणिरिति यायजूकः अनवरतयजनपरः। "इज्याशीलो यायजूकः" इत्यमरः। यजतेः पौनःपुन्यार्थे यङन्तात् "यजजपदशां यङः" इति कर्तरि ऊकप्रत्ययः। तेन प्रबन्धकर्तुर्निदे-[र्दे]शः कृतः। चित्रं विस्मयनीयं मानुषवेषेप्यमानुषव्यापारतया कविकल्पनावैचित्र्यशालितया चाश्चर्यकरमिति भावः। हरेः श्रीकृष्णस्य चरित्रं चरितं निबध्नाति पद्यमयकाव्यात्मना रचयतीत्यर्थः। "बध बन्धने" इति धातोः कर्तरि लट्। तेन हरिचरितवर्णनरूपतया परमपुरुषार्थफलकत्वं व्यज्यते। अत्रानुबन्धचतुष्टयादिकं यथोदितमवगन्तव्यम् ॥ ५३ ॥

एवं प्रबन्धादावाचरणीयं मङ्गलादिकमभिनिर्वर्त्य संप्रति विवक्षितभगवच्चरितवर्णनमारभमाणस्तदावासभूतां द्वारवतीं नाम नगरीमुपवर्णयत्येकत्रिंशता अस्तीत्यादिना—

**अस्ति क्षितेराभरणं रमान्तःपुरी पुरी वृद्धिकरी यदूनाम् ।**
**वितन्वती द्वारवतीत्यभिख्यां [1]विख्यातिविस्तारवती जगत्याम् ॥५४॥**

अस्तीति—क्षितेः भूमेः आभरणं अलंकारभूता रमायाः श्रिय अन्तःपुरी अवरोधभूता अष्टलक्ष्मीनिवासरूपेत्यर्थः। यदूनां यदुवंशजानां राज्ञाम्

[1] विख्यात is another reading noted by the commentator.

वृद्धिकरी सकलाभ्युदयस्थानभूता । विख्यातेः प्रसिद्धेः विस्तारोऽतिशयस्सोऽस्या इति तादृशी । अतिप्रसिद्धिशालिनीत्यर्थः । विख्यातेति पाठे विख्यातः प्रसिद्धः विस्तारः परिणाहः सोऽस्या इत्यर्थः । अतिविशालतया जगत्प्रथितेति भावः । पुरी नगरी । जगत्यां भुवने । द्वारवतीति प्रकृष्टद्वारशालिनी इति । एवं अखिलनगरातिशायिताष्टादशद्वारोपलक्षिततयेत्यर्थः । अभिख्यां अन्वर्थनामधेयम् । वितन्वती विस्तारीकुर्वाणा सती । अस्ति वर्तते । भगवतो वैकुण्ठगमनानुपदमेव सामुद्रसलिलाप्लुतत्वेऽपि सकलनगरातिशाय्यपरिमितविभवोपलक्षिततयातिप्रख्यातिमत्तया "नरः पतितकायोऽपि यशःकायेन जीवति" इति न्यायेन प्रसिद्धतयाद्यापि परिदृश्यमानेव प्रतीयत इति भावः । तेन भूतभाव्यर्थसाक्षात्काररूपभाविकालंकारः प्रतीयते । छेकानुप्रासरूपकसंसृष्टिः ॥ ९४ ॥

**वसुन्धरायां वसुधाधिनाथैः [1]सुखं धृतायां [2]सुचिरं यदीयैः ।**
**प्राकारदंभात्परिखापथेन प्राप्तस्समुछ्वासकृते फणीन्द्रः ॥ ५५ ॥**

**वसुन्धरायामिति**—यदीयैः द्वारवतीसम्बन्धिभिः । तन्निवासिभिरित्यर्थः । वसुधाधिनाथैः भूपैः । वसुन्धरायां भूमौ । सुखं अनायासेन स्वेतरपालकानपेक्षमिति भावः । सुचिरं बहोः कालात् । धृतायां पालितायामित्यर्थः । फणीन्द्रः शेषः निखिलभूभरणाधिकृत इति भावः । समुछ्वासकृते विश्रमाय । परिखैव खेयमेव पन्थाः मार्गः तेन । परिखाया आपाताळव्यापित्वादिति भावः । परितः खन्यत इति परिखा । "अन्येष्वपि दृश्यते" इति उप्रत्ययः । प्राकारो वरणः इति दंभात् कपटात् । "कपटोऽस्त्रीव्याजदंभोपधयः" इत्यमरः । प्राप्तः समागतः भुवमिति भावः । चिरात् भूभरणखिन्नो यत्र क्वचिन्निजभारावतरणमाशासानस्संप्रति भारापनये संपन्ने गुहारूपं स्वावासमपहायातिविस्तृतां प्रवातादिना विश्रमार्हां भुवमुत्पतितश्शेष एवायमिह कुण्डलितेन पुनः प्राकार इति भावः । अत्र राजकृतभरणे सुखमिति शेषागमने समुच्छ्वासकृत इति कथनादत्रत्यभूपानां शेषादाधिक्यप्रतीत्या व्यतिरेको व्यज्यते । नगरप्राकारे तथात्वं दंभपदेनापह्नुत्यात्युन्नतत्वधवळत्वकुण्डलाकारत्वादिधर्मसाम्येन भूभारवहनसंपन्नश्रमापनोदार्थागतफणीन्द्रत्वारोपादपह्नवालंकारः ॥९९॥

[1] G. चिरम् . [2] G. रुचिरम् .

**यस्याः समायोजितखेयकाञ्चे[1]रुड्याणमुद्दाममवैमि सालम् ।**
**रत्नार्गला[2]रंभितरम्य[3]कीलमुखं मणीगोपुरमप्यमुष्य[4] ॥ ५६ ॥**

**यस्या इति**— समायोजिता सर्वतोनिबद्धा खेयं परिखैव काञ्चिः मेखला नितम्बधार्यभूषाविशेषः यस्यास्तादृश्याः। "खेयं तु परिखाधारस्तु" इति, "स्त्रीकट्यां मेखला काञ्ची" इति चामरः । यस्याः द्वारवत्याः मेखलालंकरणे अनुपदमुड्याणापेक्षासंभवादिति भावः । उद्दामं उच्छ्रितम् । सालं प्राकारं कर्म । उड्याणं मेखलोपरि मध्यधार्यभूषाविशेषम् । तद्रूपमयमिति भावः । तथा मणीगोपुरं मणिमयं पुरद्वारसौधमपि । "पुरद्वारं तु गोपुरम्" इत्यमरः । अमुष्य उड्याणस्य । रत्नमय्या अर्गळया कवाटविष्कंभेन आरम्भितं संपादितं रत्नार्गळारूपमिति भावः । रम्यं रमणीयं कीलं भूषासन्धिघटनविघटनानुकूलशङ्कुविशेषः यस्य तादृशं मुखभागं कोटिद्वयसंघटनार्हरत्नादिमण्डितभूषाग्रभागमिति भावः । अवैमि मन्ये, उड्याणत्वेन तन्मुखत्वेन च संभावयामीत्यर्थः । अवपूर्वात् "इण् गतौ" इति धातोर्लट् । अत्र परिधात्मककाञ्चीधारिण्या नगरीयुवत्या उड्याणतादात्म्यस्य साले तथा रत्नार्गळाख्यकीलोपलक्षितोड्याणमुखभागतादात्म्यस्य मणिगोपुरे च संभावना स्वरूपोत्प्रेक्षा पूर्वा खेयस्य काञ्चीत्वरूपणेन नगर्या नारीत्वरूपणाभिव्यक्तिरूपैकदेशविवर्तिसावयवरूपकोत्थापिता द्वितीया त्वर्गलायां कीलत्वारोपरूपरूपकोत्थापितेति रूपकसंकीर्णयोरनयोः संकरः ॥

**मन्ये मरुत्वन्मणिनिर्मितानि शिरोगृहाणां शिखराणि यस्याम्[5] ।**
**वियन्नदीवीचिभरानुषङ्गादजस्रमञ्चज्जल[6]नीलिकानि ॥ ५७ ॥**

**मन्य इति**—यस्यां द्वारवत्याम् । मरुत्वन्मणिभिः इन्द्रनीलरत्नैः निर्मितानि रचितानि । शिरोगृहाणां चन्द्रशालानाम् । शिखराणि शृङ्गाणि कर्म । अजस्रं अनवरतं अविच्छेदेनेति यावत् । वियन्नद्याः स्वर्गङ्गायाः वीचिभरैः तरङ्गपरंपराभिः सह अनुषङ्गात् संसर्गात् निमित्तात् । प्रासादानां स्वर्गातिशायित्वादिति भावः ।

[1] उद्यान. [2] लम्बित. [3] कीलं मुखम्.
[4] अमुष्याः. [5] यस्याः. [6] नीलितानि.

अञ्चन्त्यः संमिलन्त्यः प्ररूढा इति यावत् । जलनील्यः शैवालानि येषु तादृशानि । मन्ये अवैमि । स्वर्गङ्गासंगसंगतशैवलवत्तया विभावयामीति भावः । अत्रेन्द्रनीलशिलाकृतत्वेन श्यामत्वचाकचक्यादिविशिष्टेषु सौधाग्रेषु सन्ततगङ्गासंगजनितशैवलसंवलितत्वरूपधर्मोत्प्रेक्षा ॥ ५७ ॥

**व्रीडातिरेकाद्विनमन्मुखीनां कन्यामणीनां परिणीतिकाले ।**
**[1]हर्म्येषु यस्यामतिलङ्घिताभ्रेष्वास्त ध्रुवालोकनमप्रयासात् ॥ ५८ ॥**

**व्रीडेति**—यस्यां द्वारवत्याम् । परिणीतिकाले विवाहसमये । प्रवेशहोमोत्तरवाङ्नियमनान्ते "आनक्षत्रेभ्य उदितेषु नक्षत्रेषु प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य उत्तराभ्यां यथालिङ्गं ध्रुवमरुन्धतीं च दर्शयति[2]" इति विहितध्रुवप्रदर्शनावसर इति भावः । व्रीडातिरेकात् लज्जातिशयात् । विनमन्ति स्वयमेवावनतानि मुखानि वदनानि यासां तादृशीनाम् । "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इति ङीष्प्रत्ययः । कन्यामणीनां कुमारीतिलकानाम् । ध्रुवालोकनं तत्कालकर्तव्यतया विहितं ध्रुवदर्शनम् । अतिलङ्घितं अतिक्रान्तं अभ्रं गगनं यैस्तादृशेषु । गगनान्तःपातिध्रुवमण्डलातीतेष्विति भावः । हर्म्येषु प्रासादेषु । अप्रयासात् अनायासेन । ध्रुवस्य तस्मादधोभावितया लज्जाविधूननेन मुखोन्नमनादिक्लेशं विनैवेति भावः । आस्त अभूत् । "आस उपवेशने" इति धातोरात्मनेपदे लङ् । इत्थं ध्रुवदर्शने संपन्ने तस्मादधोगताया अरुन्धत्या दर्शनं कैमुत्यन्यायाल्लभ्यत इति भावः । अत्युक्तिरलङ्कारः ॥ ५८ ॥

**सौधेषु यस्यां सुदृशः शशाङ्के गण्डोपधानभ्रमतः कपोलौ ।**
**तन्वन्ति रात्रीषु तदङ्कलग्नं कस्तूरिकाचित्रकमङ्कदंभात् ॥ ५९ ॥**

**सौधेष्विति**—यस्यां द्वारवत्याम् । सौधेषु प्रासादेषु । रात्रिषु निशासु । सुदृशः शोभना विषयग्रहणचतुरा इत्यर्थः दृशः यासां तादृशाः वनिताः । तथा-

[1] सौधेषु ।

[2] In the printed edition of the Āpastamba Gṛhya Sutra the portion आ नक्षत्रेभ्यः belongs to sutra 11 of kaṇḍa 6 and the other portion is found as sutra 12.

विधप्रासादपर्यङ्कशायिन्य इति भावः। शशाङ्के चन्द्रे। गतिवशात् स्वपर्यङ्कमागत इति भावः। गण्डोपधानभ्रमतः कपोलविन्यसनार्हवृत्ताकारोपबर्हणभ्रान्त्येत्यर्थः। कपोलौ गण्डस्थले। तन्वन्ति विन्यसन्ति इत्यूह्यत इति भावः। कुत एतदिति चेदत्राह। तत् तस्मात्। कपोलविन्यासादेव हेतोः। अत्र चन्द्रे कस्तूरिकया मृगमदद्रवेण रचितं चित्रकं विशेषकं मकरिकादिपत्ररेखेति यावत् अङ्कः लाञ्छनमिति दम्भात् कपटात्। लग्नं सम्बद्धम्। अद्यापि दृश्यत इति भावः। कथमन्यथा अत्युच्छ्रिते चन्द्रमण्डले मालिन्यप्रसक्तिरिति भावः। अत्र चन्द्रगतमङ्कमपह्नुत्य तदारोपितेन कस्तूरिकाचित्रकरूपकार्येण तत्करणीभूतस्य चन्द्रमार्गगतसौधतलशयितकामिनीकृतस्य चन्द्रे गण्डोपधानत्वभ्रान्तिकृतस्य कस्तूरीमकरिकाङ्कितस्वकीयकपोलविन्यसनरूपकारणस्यानुमानादनुमानालंकारः। स च कार्यकोटावपह्नुत्या कारणकोटौ भ्रान्तिमता चानुप्राणित इति संकरः॥ ५९॥

**सौधेषु यस्यां [1]सुदतीमुखश्रीचौर्यादवाप्तध्वजशूलपातः।**
**विधुस्सुधावैभववीतबाधः [2]किणं बिभर्ति व्रणजं किमङ्कम्॥ ६०॥**

**सौधेष्विति**—यस्यां द्वारवत्याम। विधुश्चन्द्रः। सौधेषु हर्म्येषु। स्वीयमार्गवर्तितया प्रतिदिवसपरिशीलितेष्विति भावः। सुदतीनां वनितानाम्। "वयसि दन्तस्य दतृ" इति दत्रादेशः। "उगितश्च" इति ङीप्। मुखश्रियः वदनशोभायाः संपदश्च। चौर्यात् अपहारात् निमित्तात्। अवाप्तः प्राप्तः स्वापराधानुगुणदण्डरूपतया प्रतिपन्न इत्यर्थः। ध्वजः केतुदण्ड एव शूलं महासाहसिकं वधार्हं वध्यस्य पादादिमूर्धान्तान्तःप्रवेशानुगुणतीक्ष्णाग्रायसदण्डविशेषः तस्मिन् पातः आरोपणं येन तादृशः तथाभूतोऽपि सन्निति भावः। सुधायाः स्वकीयामृतस्य वैभवेन महिम्ना मृतसंजीवनशक्तिविशेषेणेति भावः। वीता अपगता बाधा शूलारोपणजनिता पीडा यस्य तादृशश्च सन्। कथमन्यथा शूलारोपितस्य पुनरुज्जीवनमिति भावः। व्रणजं शूलखातव्रणसंजातम्। किणं व्रणविरोपणकठिनमेचकचर्मविशेषम्। अङ्कं चिह्नं शूलारोपणसूचकमित्यर्थः। विभर्ति किं धत्ते किमु। "डुभृञ् धारणपोषणयोः" इति धातोर्लट्। अत्र चन्द्रमण्डलगतं व्रणकिणाङ्कतयाध्यवसितं

[1] A[1]., G. सुमुखी. [2] G. कणं.

लाञ्छनं प्रति सुदतीमुखशोभाध्यवसितसंपदपहारकृतध्वजरूपशूलारोपणस्य कविकल्पितस्याहेतोः हेतुत्वप्रतीत्या हेतूत्प्रेक्षा। सा चातिशयोक्तिरूपकानुविद्धेति संकरः ॥ ६० ॥

**रयानुधावद्रविवाजिवल्गत्खुराग्रशीर्यत्कुरुविन्दशङ्काम् ।**
**पुष्णन्ति [1]तद्गोपुरशृङ्गभूमौ पूषोपलेभ्यः स्फुरिताः स्फुलिङ्गाः ॥६१॥**

**रयेति**—तस्यां द्वारवत्याम्। गोपुरद्वाराणां प्रासादानामिति भावः। शृङ्गभूमौ शिखरप्रदेशे। पूषोपलेभ्यः सूर्यकान्तमणिभ्यः प्रासादाग्रसंघटितेभ्य इति भावः। स्फुरिताः उद्गताः। स्फुलिङ्गाः अग्निकणाः। रविकिरणसंपर्कान्निर्गताः इति भावः। रयेण जवेन "रंहस्तरसी तु रयः स्यदः" इत्यमरः। अनुधावतां प्रधावतां रविवाजिनां सूर्याश्वानां वल्गद्भिः घटमानैः खुराग्रैः शफकोटिभिः शीर्यन्तः विशीर्यमाणाः कुरुविन्दाः प्रभाधिकाः पद्मरागविशेषा इति शंकां संभावनाम्। पुष्णन्ति अभिवर्धयन्ति। "पुष पुष्टौ" इति धातोर्लट्। गोपुराणामत्युच्छ्रितत्वेन तत्र सूर्याश्वखुरकुट्टनस्य तथा प्रासादानां महार्घमणिनिर्मितत्वेन तथाविधरत्नखण्डनस्य च तादृश्या भावनायाः संभावितत्वादिति भावः। उत्प्रेक्षोदात्तयोः संसृष्टिः ॥६१॥

**शीतालुभिर्यत्र शिरोगृहेषु गाढं कुमारैर्घटि[2]तार्गळेषु ।**
**तारासु रुद्धासु चिरं तमिस्रा मन्ये [3]हिमर्ताविभवन्महत्यः ॥ ६२ ॥**

**शीतालुभिरिति**—यत्र द्वारवत्याम्। हिमर्तौ हेमन्ते। शीतालुभिः शीतमसहमानैः। "शीतोष्णाभ्यां तदसहने" इत्यालुच्प्रत्ययः। कुमारैः बालैः। नक्षत्रमार्गातिगामिसौधतलशायिभिरिति भावः। शिरोगृहेषु चन्द्रशालासु। सौधवातायनकवाटेष्विति भावः। गाढं अशिथिलं यथातथा। घटिता योजिता अर्गळाः कवाटविष्कम्भा येषु तादृशेषु सत्सु। अविरळदक्षिणोत्तरश्रेणीरूपतया ऊर्ध्वाधःपार्श्वेषु मार्गान्तररहितेष्विति भावः। अतएव तारासु उडुषु। चिरं घटिकाद्वयादिकालम्। रुद्धासु प्रतिहतगमनासु। पिहितवातायनोद्घाटनावसरप्रतीक्षणेन विळम्बितास्विति भावः। न पुनः सर्वथा निरुद्धास्विति तथासति शीतभीति [कृत]

[1] A[1]. यत्.
[2] तारेरेषु-तारतेषु.
[3] भि.

स्य कवाटपिधानस्य सूर्योदयावधिकतया तारकाप्रतिरोधे तदनुसृतगतेः सूर्यस्यापि निरोधने रात्रिविराम एव न स्यादित्याशयः। तमिस्राः रात्रयः महत्यः। तत्तद्दिवसेभ्यो मुहूर्ताधिकाः। अभवन् संजाताः। इतीति शेषः। मन्ये संभावयामि। अतएव यावद्यावद्धिमशैलसामीप्येन शीताधिक्यं तावत्तावद्रात्रिदैर्घ्यमित्यत्रेदमेव निमित्त-मित्याशयः। अत्र निमित्तान्तरकृतरात्रिदैर्घ्यं प्रति उक्तविधया तारकप्रतिरोधस्य हेतुत्ववर्णनाद्धेतूत्प्रेक्षा ॥ ६२ ॥

**ध्वजाग्रभिन्नद्रुहिणाण्डभाण्डनिष्यन्दमानाम्बुनिरन्तरेषु ।**
**सौधेषु धारागृहसौख्यदेषु जानाति यस्यां जनता न घर्मम् ॥ ६३ ॥**

**ध्वजेति**—यस्यां द्वारवत्याम्। जनता जनसमूहः। "तस्य समूहः" इत्यधि-कारे "ग्रामजनबन्धुभ्यस्तल्" इति तल्, "तलन्तं स्त्रियाम्" इति स्त्रीत्वम्। ध्व-जानां केतुदण्डानां अग्रैः कोटिभागैः भिन्नात् छिद्रितात् ब्रह्माण्डभाण्डात् तद्गतछिद्र-मार्गादिति भावः। निष्यन्दमानैः निरन्तरं प्रस्रवद्भिः न पुनर्गङ्गाप्रवाहवत् प्रवहद्भिः तथा सत्यावासानर्हतापातात् अम्बुभिः सलिलैः निरन्तरेषु सर्वतो व्याप्तेषु। सौधेषु हर्म्येषु। धारागृहवत् सलिलयन्त्रोपेतसदनेष्विव "तत्र तस्येव" इति वतिः। अधः-प्रसृतातिवेगवत्प्रवाहाभिमुखविनिवेशितोन्मुखप्रणाळीसमुत्पतितसलिलसंसिक्तशा-लावदिति भावः। सौख्यं सुखं सन्तापोपशमनरूपं ददति वितरन्तीति तादृशेषु सत्सु। घर्मं ग्रीष्मतापम्। न जानाति नानुभुङ्क्ते। सौधानां सन्ततसलिलसिक्त-तया तापप्रसक्तेरेवाभावे तत्रत्याः सर्वे ग्रीष्मो नाम कोऽपि तापनः काल इत्यमुमेवार्थं न जानन्तीति भावः। अत्र पौरजनवृत्तितयाध्यवसितं ग्रीष्मतापापरिज्ञानं प्रति उक्तविधया धारासदनसदृशसौधनित्यनिवासस्य हेतुत्वप्रतीत्या हेतूत्प्रेक्षा गूढा धारागृहवदित्युपमया संसृष्टिः ॥ ६३ ॥

**वियद्धुनौ यत्र विहारभाजां विश्रान्तिहेतोर्विबुधाङ्गनानाम् ।**
**प्रणीतमम्भोभवनं यदीयं प्रासादमभ्रंकषशृङ्गमूहे ॥ ६४ ॥**

**वियदिति**—यत्र द्वारवत्याम्। अभ्रं गगनं कषतीत्यभ्रंकषं व्योमान्तर्व्या-पीत्यर्थः। शृङ्गं शिखरं यस्य तादृशम्। "सर्वकूलाभ्रकरीषेषु कषः" इति अभ्रशब्दे

उपपदेकषधातोः खश्प्रत्यये "अरुर्द्विषदजन्तस्य मुम्" इति अजन्तत्वान्मुमागमः। यदीयं द्वारवतीसम्बन्धिनम्। प्रासादं हर्म्यं विषयम्। वियद्गुनौ व्योमगंगायाम्। द्वारवतीप्रासादशृङ्गमभितः प्रसृतायामिति भावः। विहारं सलिलक्रीडां भजन्तीति तादृशीनाम्। विबुधाङ्गनानां सुरसुन्दरीणाम्। विश्रान्तिहेतोः श्रमापनयनार्थम्। "विभाषा गुणे स्त्रियाम्" इति हेत्वर्थे पञ्चमी। प्रणीतं कृतम्। विश्वकर्मणा विनिर्मितमिति भावः। अम्भोभवनं सलिलगृहम्। जलमध्यस्थविहारसदनमित्यर्थः। ऊहे संभावयामि। अहमिति शेषः। स्वर्गङ्गासलिलक्रीडापराणां सुरसुदृशां तत्रैव विश्रमस्यासकृदनुभूयमानतया अक्षतनिर्माणचातुर्या अमानुषत्वनिश्चयेन च द्वारवतीसंसक्ततया तदीयत्वेन प्रतीयमानमपि विबुधाङ्गनाविश्रमार्थं विश्वकर्मणा मनसा निर्मितसलिलविहारसदनमवगच्छामीति भावः। अत्र द्वारवतीहर्म्यशिखरे सुरवनिताजलगृहतादात्म्यसंभावना स्वरूपोत्प्रेक्षा ॥ ६४ ॥

**मन्दाकिनीकल्पितमज्जनाभिः पुरन्दरान्तःपुरसुन्दरीभिः।**
**वाताय बद्धानि यदीयसौधे वासांसि मन्ये विचलाः पताकाः ॥६५॥**

**मन्दाकिनीति**—यदीयसौधे द्वारवतीप्रासादे। विचलत्पताकाः प्रविचलन्तीः वैजयन्तीः। "पताका वैजयन्ती" इत्यमरः। मन्दाकिनीकल्पितमज्जनाभिः स्वर्गङ्गाविरचितस्नानकर्मभिः। पुरन्दरान्तःपुरसुन्दरीभिः पुरुहूतावरोधवधूभिः। वाताय पवनाय। स्नानार्द्रवसनशुष्कीकरणार्थवातविधूननायेति भावः। निबध्य प्रसारितानीत्यर्थः। ध्वजापदेशसौधाग्रविच्छुरितदण्डेष्विति भावः। वासांसि महेन्द्रवधूधारणार्हदिव्यवसनानि। मन्ये संभावयामि। अत्र ध्वजपटेषु वातविधूननार्थं निबद्धदिव्ययोषिद्वासस्तादात्म्यसंभावना स्वरूपोत्प्रेक्षा ॥ ६५ ॥

**[1]वलद्विषद्वारणदानपङ्कनीलीविलिप्ता [2]नियतं पताकाः।**
**सौधेषु यस्यां सुरसिन्धुपूरे विशोध्य [3]वातो विशदीकरोति ॥ ६६ ॥**

**वलद्विषदिति**—यस्यां द्वारवत्याम्। वातः पवनः। इन्द्रोपजीविभृत्यरूप इति भावः। वलद्विषतः इन्द्रस्य वारणस्य ऐरावतस्य दानपङ्कस्य मदकर्दमस्य

[1] चल. [2] नियताः. [3] पाको.

नील्या मलेन विलिप्ताः मिश्रिताः। पताकाः वैजयन्तीः कर्म। महेन्द्रविरुदरूपतया तदीयगजमस्तकोपरि धार्यमाणतया पवनचालनवशात् तदीयगण्डगतमदपङ्कसंकलनेन मलिनीकृता इति भावः। सौधेषु प्रासादेषु स्वर्गगासदेशगतेषु निर्मलस्फटिकशिलाफलकरचितेषु इति भावः। सुरसिन्धोः वियद्गङ्गायाः पूरे प्रवाहे। विशोध्य प्रतिपदं गङ्गायां संसिच्य। सौधशिलास्वभिहत्येति भावः। विशदीकरोति निर्मलीकुरुते। असकृत्सेचनाभिहननरूपेण धावनकर्मणा पङ्कमालिन्यमपनयतीति भावः। अविशदं विशदं करोतीति विशदशब्दात् "कृभ्वस्तियोगे संपद्य कर्तरि च्विः" इति अभूततद्भावे च्विप्रत्यये "अस्यच्वौ" इतीत्वे "ऊर्यादिच्विडाचश्च" इति गतिसंज्ञया "कुगतिप्रादयः" इति तिङन्तेन समासे विशदीकरोतीति भवति। नियतं निश्चितम्। अत्र द्वारवतीसौधपताकासु पवनचालनवशादसकृन्निकटस्थगङ्गोदके सौधशिलासु च संबद्धासु गजमस्तकोपरि धारणवशोपनतमदपंकमालिन्यापनोदनार्थवातधाव्यमानेन्द्रपताकातादात्म्याध्यवसायाद्वस्तुस्वरूपोत्प्रेक्षेति केचित्।

वस्तुतस्तु पताकागतायामसकृत् गङ्गोदकसौधशिलासंघट्टनक्रियायामेव पवनकृतमहेन्द्रपताकाधावनात्मकक्रियातादात्म्यसंभावनाक्रियास्वरूपोत्प्रेक्षैव। उभयत्र विषयस्य सौधपताकायास्तच्चालनरूपक्रियायाश्चानुपादानादनुक्तविषया ॥ ६६ ॥

**मन्दाकिनीवीचिमरुत्प्ररोहदोधूयमानध्वजशाटिकासु।**
**यच्चन्द्रशालासु न यान्ति सिद्धा यत्नं रतान्ते व्यजनानिलाय ॥ ६७ ॥**

मन्दाकिनीति—मन्दाकिनीवीचीनां वियद्गङ्गातरङ्गाणां मरुत्प्ररोहैः पवनाङ्कुरैः शैत्यसौरभ्यमान्द्यसंयुतैरिति भावः। दोधूयमानाः प्रकंप्यमानाः ध्वजशाट्यः यासु तादृशासु। "धूञ् कंपने" इति धातोर्यङन्तात् कर्तरि शानच्। यस्या द्वारवत्याश्चन्द्रशालासु शिरोगृहेषु। सिद्धाः। यदीयसौधेषु वनिताभिस्समं संक्रीडमाना वैमानिका देवयोनिविशेषा इत्यर्थः। रतान्ते सुरतावसाने। रतिश्रमजातस्वेदशमनार्थं पवनसंवलनमाकांक्षमाणा इति भावः। व्यजनानिलाय ताळवृन्तपवनाय। यत्नं उद्यमम्। न यान्ति न प्राप्नुवन्ति। सकलभुवनचारिणामप्यत्रैव

विहारवर्णनात् सौधानां निखिलातिशायिरामणीयकं व्यज्यते । अत्र सिद्धश्रमापनयनरूपव्यजनकार्यस्य तत्सदृशध्वजपटपवनेनैव संपत्त्या उपमानाक्षेपरूपः प्रतीपालङ्कारः ॥ ६७ ॥

**प्रत्युप्तमुक्ताफलकैतवेन प्रस्वेदिनी भास्करसन्निधानात् ।**
**प्रासादपङ्क्तिः प्रचलत्पताकाव्याजादुदञ्चद्व्यजनेव यस्याम् ॥ ६८ ॥**

प्रत्युप्तेति—यस्यां द्वारवत्याम् । प्रासादपङ्क्तिः हर्म्यावलिः । भास्करसन्निधानात् सूर्यसान्निध्यान्निमित्तात् । प्रत्युप्तानि निचितानि मुक्ताफलानि फलाकारमौक्तिकानीति कैतवेन छद्मना । प्रस्वेदिनी प्रकृष्टस्वेदवती । प्रचलन्तीनां चञ्चलानां पताकानां ध्वजपटीनां व्याजात् कपटात् । उदञ्चत् उच्चलितं व्यजनं तालवृन्तं यस्यास्तादृशीव । भातीति शेषः विभाव्यत इत्यर्थः । अत्र प्रचलत्पताकासु तदसत्यत्वप्रतिपादकव्याजपदेन तत्त्वमपह्नुत्य प्रचलव्यजनत्वमारोप्य तदारब्धं प्रासादपङ्क्तिकृतव्यजनोदञ्चनं प्रति भास्करसान्निध्यहेतुकतयाध्यवसितस्य प्रत्युप्तमौक्तिकेषु तथात्वं कैतवपदेनापह्नुत्य तदारोपितस्वेदातिशयस्य हेतुत्ववर्णनात् हेतूत्प्रेक्षा कैतवापह्नुतिगर्भा हेतूत्प्रेक्षोत्थापिता च ॥ ६८ ॥

**मन्ये मणी[1]तोरणमालिकां यत्प्रासादलोलां भवनेन्दिराभिः ।**
**परस्परं भाग्यविलोकनाय प्रसारितामेव कटाक्षरेखाम् ॥ ६९ ॥**

मन्य इति—यस्याः द्वारवत्याः प्रासादेषु हर्म्येषु लोलां विचलन्तीम् । प्रतिभवनं एकतरश्रेणीप्रासादाग्रमारभ्य तदभिमुखश्रेण्यन्तरसदनसौधाग्रपर्यन्तनिबद्धां पवनगतिवशात् विचलन्तीमिति भावः । मणीतोरणमालिकां इन्द्रनीलमणिमयमकरतोरणमालाम् । जातावेकवचनं प्रतिभवननिबद्धतोरणामिति भावः । भवनेन्दिराभिः तत्तन्मन्दिराधिदेवताभिः । परस्परं अन्योन्यम् । "कर्मव्यतीहारे सर्वनाम्नो द्वे वाच्ये" इति द्विरुक्तौ सर्वनाम्न उत्तरपदे समाससद्भावे च पूर्वपदस्थस्य "सुपस्सुब्वक्तव्यः" इति सुपःस्वादेशे परस्परम् । भाग्यानां संपदां विलोकनाय दर्श-

[1] वन्दन.

नाय स्वसंपदः परिज्ञातत्वेन इतरसंपन्निरीक्षणेन द्वयोस्तारतम्यपरीक्षार्थमिति भावः। प्रसारितां प्रेरिताम्। कटाक्षाणामपाङ्गवीक्षणानां रेखां पङ्क्तिमेव। मन्ये अवगच्छामि। नयनस्य प्राप्यकारितया तस्यादृश्यत्वेऽपि तज्जनितस्य खण्डचक्षुःप्रसरस्य तप्ततैलान्तर्गतादृश्यदहनोत्थितज्वालाया इव न हि दृश्यत्वविरोध इति भावः। अत्र सौधतोरणमालासु परस्परभाग्यपरीक्षार्थकभवनेन्दिराकटाक्षमालातादात्म्यसंभावना स्वरूपोत्प्रेक्षा॥ ६९॥

**[1]प्रायो वलारेः परिपन्थिवर्गे [2]पराजिते यत्र [3]नृपप्रतापैः।**
**चकार वेधा हरिचाप[4]वल्लीं चञ्चन्मणीतोरणदाम सौधे॥ ७०॥**

**प्राय इति**—वलारेः इन्द्रस्य। परिपन्थिवर्गे वैरिबृन्दे। नृपप्रतापैः द्वारकानिवासिभूपतेजोभिः। पराजिते परिभूते सति। इन्द्रस्य योद्धव्याभावेन तदर्थनिर्मितचापस्य नैष्फल्यसंभावनायां सत्यामिति भावः। वेधाः स्वनिर्मितचापसाफल्यसंपादनेच्छुरिति भावः। हरिचापवल्लीं इन्द्रधनुर्लताम्। यत्र द्वारवत्याम्। सौधे प्रासादे। चञ्चन्मणीमयं तरळरत्नपरिकलितं तोरणदाम नगरबहिर्द्वारवैजयन्तीमालारूपाम्। प्रायः प्रायेण। चक्रे विदधे। तत्साफल्याय तोरणाग्रे न्यस्तवान् किमिति भावः। अत्र द्वारवतीतोरणमालायां रेखाकारस्वसजातीयनानावर्णविभ्राजिततया तथाविधेन्द्रचापगतधर्मसम्बन्धनिमित्तेन द्वारवतीनृपतेजःपराभूतवैरिकतया निष्फलत्वज्ञानवत्वेनाध्यवसितब्रह्मणा सफलत्वप्रापणेच्छया द्वारवतीगोपुराग्रविन्यस्तेन्द्रचापतादात्म्यसंभावना वस्तुस्वरूपोत्प्रेक्षा। यद्वा इन्द्रचापत्वेनाध्यवसितायास्तोरणमालायाः ब्रह्मकृतत्वेनाध्यवसितां सौधाग्रविन्यसनक्रियां प्रति द्वारवतीगतनृपकृतासुरपराजयस्य महेन्द्रधनुषो नैष्फल्यबुद्ध्युत्पादनद्वारा हेतुत्वस्य सतिसप्तम्या प्रतीयमानतया हेतूत्प्रेक्षा। यद्वा नानाविधरत्नकरणकशिल्पिकर्तृकगोपुरतोरणविन्यसनक्रियायां निरुक्तब्रह्मकर्तृकेन्द्रधनुर्विन्यसनक्रियातादात्म्यसंभावना क्रियास्वरूपोत्प्रेक्षा॥ ७०॥

[1] प्रायोऽचलारेः [2] पलायिते.
[3] नृपः [4] वल्लीचञ्चत्.

**शोणाधरा यन्मणिसौधभूमौ वीणागुणास्फालनलब्ध[1]वर्णा ।**
**एणाङ्करेखाग्रहणाय यत्नं कोणाशया कोरकितं विधत्ते ॥ ७१ ॥**

**शोणेति**—यस्याः मणिसौधभूमौ रत्नमयप्रासादतले । वीणायाः विपञ्च्याः गुणानां तन्त्रीणामास्फालने तोलने लब्धवर्णा विचक्षणा । वीणावादनविचक्षणेत्यर्थः । "लब्धवर्णो विचक्षणः" इत्यमरः । शोण अधरो यस्यास्तादृशी । काचिद्वनितेत्यर्थः । कोणः वीणावादनसाधनकुटिलाग्रस्फाटिकदण्डविशेष इति आशया इच्छया । वीणाकोणत्वभ्रान्त्येत्यर्थः । "कोणो वीणादिवादनम्" इत्यमरः । यद्वा कोण इत्याशयोऽभिप्रायो यस्यास्तादृशी सतीत्यन्वयः । एणाङ्कस्य चन्द्रस्य रेखायाः कलामात्रावशिष्टचन्द्रखण्डस्य गतिवशात् सौधतलगतकामिनीकरपरिसरमनुसृतस्येति भावः । ग्रहणाय आदानाय । यत्नं उद्यमम् । कोरकितं संजातकोरकम् । "तदस्य संजातं तारकादिभ्य इतच्" इति इतच्प्रत्ययः । फलोन्मुखमित्यर्थः । विधत्ते करोति । कलामात्रशिष्टतया वक्राकारतया धवळतया दन्तिदन्तादिकृतवीणाकोणसाम्याच्चन्द्रकलायामबाधितकोणत्वभ्रान्त्या तत्संग्रहणोद्यताभूदिति भावः ॥ ७१ ॥

**कोकारिरेखामणिकोणयष्ट्या निक्वाणयन्त्यो निपुणं विपञ्चीम् ।**
**सुधार्द्र[2]तन्त्रीं स्वरविप्लवेन सौधेषु यस्यां सुदृशस्त्रपन्ते ॥ ७२ ॥**

**कोकेति**—यस्याम् । सौधेषु हर्म्येषु । सुदृशः वनिताः । कोकारेश्चन्द्रस्य रेखया कलयैव मणिमय्या हीरकस्फटिकादिकृतया कोणयष्ट्या वीणावादनदण्डेन । विपञ्चीं वीणाम् । निपुणं चतुरतरं यथा तथा । स्वरविकृतौ संपन्नायां वादनाचातुर्यकृतत्वबुद्ध्या पुनःपुनः साधुतयेति भावः । निक्वाणयन्त्यः वादयन्त्यः सत्यः । सुधया अमृतेन तन्त्रीसंघृष्टचन्द्रकलोद्गतयेति भावः । आर्द्राणां क्लिन्नानाम् । "आर्द्रं सान्द्र क्लिन्नम्" इत्यमरः । तन्त्रीणां वीणागुणानां स्वराणां निषादादीनां विप्लवेन व्यत्यासेन वैकृतेनेत्यर्थः । तन्त्र्यां सलिलक्लिन्नायां स्वरविकृतेरानुभाविकत्वादिति भावः । त्रपन्ते विलज्जिता भवन्ति । "त्रपूष् लज्जायाम्" इति धातोर्लट् । पुनःपुनः समञ्जसवादनेऽपि सुस्वरानुत्पत्तिनिमित्तजिज्ञासायां सलिलसेकस्य तन्निदानत्वमवधार्य तदुत्पत्ति-

[1] वर्णाः [2] तन्त्रिस्वर.

स्थानं वीणाकोणं विदित्वा तदन्यथानुपपत्त्या विशेषदर्शनसहकृतया वादनसाधनीकृतं कोणमेव कलाशेषं चन्द्रं निश्चित्य तत्र वीणाकोणत्वभ्रान्तिकृतायां तदादानक्रियायां स्वस्वासमीक्ष्यकारिताया एव निमित्तत्वावगमेन सापत्रपा भवन्तीति भावः । भ्रान्तिमदलङ्कारः । "भ्रान्तिमानन्यसंवित्तिरन्यस्मिन् समदर्शनात्" इति लक्षणात् ॥ ७२ ॥

**सङ्गीतसर्वस्वरहस्य[1]भङ्गीसारस्यसारानुकृतावदक्षा ।**
**विद्धा [2]नखैर्यत्र विलासिनीनां वीणा विरावेण विरोदितीव ॥ ७३ ॥**

**सङ्गीतेति**—यत्र द्वारवत्याम् । वीणा विपञ्ची । विलासिनीनां नारीणाम् । विलासवशात् वीणां वादयन्तीनामिति भावः । सङ्गीतस्य गानविद्यायाः सर्वस्वेषु सर्वांशेषु गानजीवनीभूतेष्वित्यर्थः । रहस्यस्य गूढार्थस्य आपातपरिचयालभ्यस्य उपदेशमूलकस्य प्रज्ञावन्मात्रलभ्यस्येति भावः । भङ्ग्याः रीतेः सारस्यस्य रसास्वादानुगुणचमत्कृतिविशेषस्य अनुकृतौ अनुकरणे विषये । विलासिनीभिरसकृदुद्भाव्यमानसारांशानूच्चारणकर्मणीति भावः । अदक्षा असमर्था सती । तेन वनितागाने वीणानिनादादत्यन्तमधुरत्वं वीणायामप्यनिरूप्यस्वरभङ्गीलयलवोपलक्षितत्वं [च] व्यज्यते । अत एव नखैः नखरैः । विद्धा ताडिता । अनुकरणानवधानानुगुणशिक्षां प्रापितेवेति भावः । विरावेण विकृतस्वरेण । अभेदे तृतीया । विरोदितीव विलपतीव । वीणानिनाद एव तत्कृतं रोदनमित्यर्थः । लोके गीतिध्वनेः विलापस्य च यावदन्तरं तस्येह विलासिनीगीतिवीणानिनादयोः परिदृश्यमानतया गीतास्वादशीलानां वीणानिनादः प्रलापवदुद्वेजनीयो भवतीति भावः । "रुदिर् अश्रुविमोचने" इति धातोः परस्मैपदे लट् । अत्रोक्तविधतारतम्येन तन्त्रीस्वनाध्यवसितं विकृतारावात्मकवीणाकृतरोदनं प्रति तरुणीगानानुकरणासामर्थ्यहेतुकतया नादसंजननानुकूलनखमुखवादनाध्यवसितं विलासिनीकृतशिक्षारूपं वेधनमहेतुरेव हेतुतयोपन्यस्तमिति हेतूत्प्रेक्षा । सा च निरुक्तहेतूत्प्रेक्षानुविद्धेति संकरः । प्रकृतनारीनखवेधनवीणारोदनादिवृत्तान्तेनाप्रकृतगुरुशिष्यव्यापारप्रतीत्या समासोक्तिरपीति सहृदयैराकलनीयम् ॥ ७३ ॥

[1] भागी.

[2] नवैः

**पाणौ गृहीत्वा परिवादिनीं यत्पौराः स्फुरत्पंचमरागमुद्राम् ।**
**अहो श्रुतिग्रामपथानुसारप्राप्तप्रकर्षा जगति प्रथन्ते ॥ ७४ ॥**

पाणाविति—यत्पौराः द्वारवतीवासिनो जनाः । स्फुरन्ती प्रथमपरिस्फुरिता पञ्चमी पञ्चमाख्यस्वराभिव्यञ्जिका तन्त्री यासां तादृश्यो रागमुद्राः रागाभिव्यञ्जकास्तन्त्र्यः यस्यां तादृशीम् । वीणायां पञ्चममारभ्यैव वादनप्रसिद्धेरिति भावः । अन्यत्र स्फुरन्ती प्रकाशमाना सर्वविदितेति भावः । पञ्चमे चण्डाले रागस्य अनुरागस्य मुद्रा लाञ्छनं यस्यां तादृशीम् । तेन पापस्य निरन्तराभ्यस्ततया अपरिहार्यत्वमभिव्यज्यते । परिवादिनीं सप्ततन्त्रीघटितां वीणाम् । "विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी" इत्यमरः । अन्यत्र परिवादिनीं अभिशस्ताम् । लोकगर्हितां नारीमित्यर्थः । "परीवादापवादवत्" इत्यमरः । पाणौ करे । गृहीत्वा उपगृह्य । धानुष्क इतिवदत्र वीणाग्राहित्वं संगीतविद्याकोविदत्वेन प्रख्यातपरं वेदितव्यम् । अन्यत्र पाणौ गृहीत्वा परिणीयेत्यर्थः । अभिशस्तापतित्वख्यातिमासाद्येति भावः । श्रुतिः स्वरावयवीभूता नादाभिव्यक्तिः ग्रामस्वरसमुदायः । सच षड्जग्रामो मध्यमग्रामः पञ्चमग्रामश्चेति त्रिविधः तेषां पथः मार्गस्य अनुसारेण अविरोधेन स्वरवैरूप्यविहीनतयेत्यर्थः । प्राप्तः लब्धः प्रकर्षः प्रख्यातिरिति यावत् । यैस्तादृशाः । अन्यत्र श्रुतीनां वेदानां ग्रामस्य समूहस्य यः पन्थाः वेदबोधितविधिनिषेधरूपः तस्यानुसारोऽनुवर्तनं विहिताचरणनिषिद्धवर्जनरूपं तेन प्राप्तः प्रकर्षो यैस्तादृशाः । सच्छीलतयेत्यर्थः । जगति भुवने । प्रथन्ते प्रसिद्धा भवन्ति । अहो अद्भुतम् । चण्डालाभिगामिन्याः पत्युः सदाचारपरत्वमद्भुतमिति भावः । अस्य च वैणिकपरत्वे न विरोध इति विरोधाभासालङ्कारः ॥ ७४ ॥

**अन्तःस्फुरद्भिः परिखासु हर्म्यैरत्युन्नतैरायतसप्तभूमैः ।**
**चतुर्दशानां जगतामपास्तसीमाविवादेव समेधते या ॥ ७५ ॥**

अन्तरिति—या द्वारवती । परिखासु खेयेषु । अन्तः जलमध्ये । स्फुरद्भिः प्रतिबिम्बतया भासमानैः । अथ च अत्युन्नतैः आसत्यलोकमुच्छ्रितैः । तथा आयताः

अतिदीर्घाः एकैकलोकायामोच्छ्रिता इति भावः । सप्त सप्तसंख्याकाः भूमयः । तत्र तत्र सञ्चाराश्च [सञ्चाराश्रय] सौधतलानि येषु तादृशैः । भूमिशब्दान्तात् बहुव्रीहेः "कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते" इति वार्तिकेन समासान्तादच्प्रत्ययः । हर्म्यैः प्रासादैः साधनीभूतैरित्यर्थः । सर्वस्यापि हर्म्यस्य सत्यान्तोच्छ्रितत्वेऽपि सप्ततलोपलक्षिततया एकैकस्या भूमेरेकैकलोकविश्रान्ततया प्रतितलमसंख्येयगवाक्षेषु शृङ्गोपेततया च स्वात्मनैव तत्तल्लोकभेदप्रपञ्चनक्षमैरिति भावः । चतुर्दशानां पाताळादिसत्यान्तानाम् । जगतां भुवनानाम् । अपास्तः परिहृतः सीमाविवादः लोकविश्रामप्रदेशविषयो व्यवहारः यैस्तादृशीव समेधते परिवर्धते । सप्तभूम्युपलक्षिततया ऊर्ध्वलोकसप्तकस्य तथा परिखाप्रतिबिम्बितप्रासादतयाधस्तनातलादिलोकसप्तकस्य च बिम्बप्रतिबिम्बाभ्यां तत्तद्भेदपरिज्ञानार्थनिर्मितेव भातीति भावः । तत्तद्भुवनायामविशेषपरिज्ञानस्याफलस्य फलत्वकल्पनारूपा फलोत्प्रेक्षा । अन्तःस्फुरद्भिरित्यादिसाभिप्रायबहुतरविशेषणोपन्यासेन परिकरानुविद्धेति सङ्करः ॥ ७९ ॥

**त्रिविक्रमस्यैकमधो निविष्टं त्रिविष्टपे चोच्छ्रितमन्यमङ्घ्रिम् ।**
**परिस्फुरन्ती परिखाजले यत्प्रासादपङ्क्तिः स्मरयत्युदग्रा ॥ ७६ ॥**

त्रिविक्रमस्येति—उदग्रा उच्छ्रिता । आसत्यलोकमुच्छ्रितेति भावः । यस्याः द्वारवत्याः प्रासादपङ्क्तिः सौधावलिः । परिखाजले खेयोदके । परिस्फुरन्ती प्रतिबिम्बिता सती । त्रयः विक्रमाः पदविन्यासा यस्य तादृशस्य । प्रथमं वामनीभूय स्वीयपदत्रयपरिमितां भुवमभियाच्य बलिना तथेति प्रतिश्रुते समनन्तरमेव तन्मानाय सकललोकातिगामिनमेकं चरणमूर्ध्वमुत्क्षिप्तवतो हरेरिति भावः । अधः अधोभागे । निविष्टं विनियोजितम् । तद्वशीकृताधोभुवनाक्रमणाय प्रयोजितमिति भावः । एकं अन्यतमम् । तथा त्रिविष्टपे स्वर्गे । ब्रह्माण्डखर्परपर्यन्तमिति भावः । उच्छ्रितं उन्नमितम् । अन्यं अधोगतादपरं च । अङ्घ्रिं चरणम् । स्मारयति स्मरतेर्णिजन्ताल्लटि "घटादयो मितः" इति मित्त्वे "मितां ह्रस्वः" इति ह्रस्वः । सदृशदर्शनस्य तत्सदृशवस्त्वन्तरस्मारकत्वादिति भावः । द्रष्टॄनिति शेषः ।

परिखोदकप्रतिबिम्बतया मूलादिशृङ्गान्तं यथावस्थितिप्रातिलोम्येनाधःशृङ्गतया भासमाना स्वरसत ऊर्ध्वशृङ्गतया भासमाना च सौधावलिः प्रपदादिकट्यन्तं स्वभावाधोमुखतया तथा कट्यादिपादान्तं प्रातिलोम्येनोर्ध्वमुखतया आयामपरिणाहाभ्यामुभयतः सदृशौ हरिचरणाविव विभातीति भावः। अत्र परिखाप्रतिफलितप्रासादानां बिम्बप्रतिबिम्बयोर्दर्शनेन तत्सदृशोर्ध्वाधोविनियोजितत्रिविक्रमचरणस्मृत्या स्मृतिमानलङ्कारः ॥ ७६ ॥

**पाताळलोके परिखाजले या हर्म्येण हन्त प्रतिबिम्बितेन ।**
**पराजितायाः फणिराजधान्याः प्रायेण मौलौ पदमादधाति ॥ ७७ ॥**

**पाताळेति**— या द्वारवती। परिखाजले। प्रतिबिम्बितेन। हर्म्येण प्रासादेन निमित्तभूतेन। पाताललोके नागलोके। स्थिताया इति भावः। पराजितायाः निजसौन्दर्यविनिर्जितायाः। फणिराजधान्याः भोगवतीनाम्न्याः वासुकिनगर्याः। मौलौ शिरसि। पदं चरणम्। प्रायेण भूयसा। आदधाति निधत्ते। आङ्पूर्वाद्धातेर्लट्। यया कयाचन विद्यया पराजितस्य प्रतिभटस्य शिरसि विजेतुश्चरणन्यसनस्य प्रसिद्धत्वादिति भावः। यद्वा पदं स्थानं स्वयमवस्थानं करोतीत्यर्थः। पराजिते विजेतृसंवहनस्य बाललीलादौ दृष्टचरत्वादिति भावः। अथवा पराभूतस्यैव नगरात्मतया तदाक्रम्य स्वयं तमधितिष्ठतीत्यर्थः। उताहो पदं चिह्नं ध्वजरूपमादधातीत्यर्थः। स्ववशीकृतराष्ट्रनगरादौ विजेतुः पताकारोपणस्य शूरधर्मत्वेन राजनीतौ दृष्टत्वादिति भावः। आहोस्वित् मौलौ ललाट इति भावः। पदं श्वपदादिचिह्नं पराभूतत्वप्रख्यापनाय श्वपदाद्याकारेण लिप्यादिरूपेण वा सूच्यादिना विद्ध्वा पर्णरसेङ्गालादिना मलिनीकरणरूपमङ्कनमित्यर्थः। तस्य साहसिकदण्डरूपतया लोकशास्त्रप्रसिद्धत्वादिति भावः। प्रासादप्रतिबिम्बस्यातिदूरावभानक्रियायां तत्पराजयपूर्वकोक्तविधपदाधानक्रियातादात्म्यसंभावना क्रियास्वरूपोत्प्रेक्षा। हन्तेति कष्टे। प्रायेणेत्युत्प्रेक्षाद्योतकं पदम्। "पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु" इत्यमरः ॥ ७७ ॥

**पुङ्खानुपुङ्खस्फुरदात्मलक्ष्मीवीक्षाकृतेऽधोमुखतां व्रजन्ती ।**
**विभ्राजते वृत्रजितः पुरीव [1]वियद्धुनीवीचिषु [2]बिम्बिता या ॥७८॥**

**पुंखेति**—वियद्धुन्या व्योमगङ्गाया वीचिषु तरङ्गेषु । बिम्बिता प्रतिफलिता । ऊर्ध्वधृतदर्पणप्रतिबिम्बितमुखादिवदधोमुखवदवभासमानेति भावः । या द्वारवती । पुङ्खानुपुङ्खं अविरळं यथा भवति तथा स्फुरन्त्या विलसन्त्या आत्मनः स्वस्याः द्वारवत्या इत्यर्थः । लक्ष्म्याः शोभायाः वीक्षाकृते दर्शनाय । चक्षुषा साक्षात्कर्तुमिति भावः । अधोमुखतां अवनतवदनतां व्रजन्ती प्राप्नुवन्ती । वृत्रजितः इन्द्रस्य । पुरी अमरावतीव । विभ्राजते विराजते । विपूर्वात् "भ्राजृ दीप्तौ" इति धातोरात्मनेपदे लट् । बिम्बप्रतिबिम्बयोरिव द्वारवतीदेवनगर्योरैकरूप्यमिति भावः । अत्र वियद्गङ्गाप्रतिफलितायां द्वारवत्यां तदीयापरिमितैश्वर्यावलोकनार्थावनतामरावतीतादात्म्यसंभावना स्वरूपोत्प्रेक्षा । यद्वा तथाविधायाः द्वारवत्याः अवनतवदनामरावतीत्वेनाध्यवसितायाः वदनावनमनं प्रत्यफलीभूतस्य द्वारवतीशोभातिशयनिरीक्षणस्य फलत्वसंभावना फलोत्प्रेक्षा ॥ ७८ ॥

द्वारवत्यमरावत्योः बिम्बप्रतिबिम्बभाववर्णनाधिगतममरावत्यां द्वारवतीसाम्यमसहमानः कल्पनान्तरमाह—

**विनिर्जिता निर्जरराजधानी वियत्तटिन्यां प्रतिबिम्बदम्भात् ।**
**निरीक्ष्यतेऽन्तर्वसुगोपनेन निमज्जितेवाम्बुनि यत्समृद्ध्या ॥ ७९ ॥**

**विनिर्जितेति**—यस्याः द्वारवत्याः । समृद्ध्या विस्तारायामवस्वादिपरिपूर्त्या साधनभूतयेत्यर्थः । विनिर्जिता पराजिता । निर्जरराजधानी अमरावती । वियत्तटिन्यां स्वर्गङ्गायाम् । प्रतिबिम्बदंभात् स्वप्रतिफलनमिति कपटात् । अम्बुनि जले । अन्तः मध्यदेशे वसुनः धनस्य गोपनेन गूहनेन निमित्तेन । अपहारिकायाः द्वारवत्याः सकाशादभिरक्षणायेत्यर्थः । निमज्जितेव भावे क्तः निमग्नेव निरीक्ष्यते दृश्यते । निरुपसर्गपूर्वात् "ईक्ष दर्शने" इति धातोः कर्मण्यात्मनेपदे लट् । जनैः इति शेषः । बलिना केनचित्पराभूतस्य तत्सकाशान्निजधनगोपनस्य प्रसिद्धतया

[1] द्युनौ.

[2] बिम्बितायाः

निजधनरक्षार्थं गङ्गाम्भसि निलीना वर्तते किमिति भावः । यद्वा यत्समृद्धया कर्त्र्या तथेयमपि विनिर्जितामरावती वसूनां वसुनामकानामष्टानां देवविशेषाणामन्तः नगरमध्ये गोपनं भरणमेव, श्लेषमूलातिशयोक्त्या अन्तः रहसि वसुनो धनस्य गोपनं प्रच्छादनं विजयिन्यै द्वारवत्या अप्रदानं तेन निमित्तेन वियत्तटिन्यां स्वर्गङ्गायां यः प्रतिबिम्बः स्वस्यास्तद्व्याजात् निमज्जितेव, कर्मणि क्तः, बलात्कृत्य सलिलनिमज्जनं कारितेव निरीक्ष्यत इत्यर्थः । बलिने दुर्बलेन प्रदेयवल्याद्यप्रदानेन यावता न प्रयच्छति तावन्तं समयं सलिलनिमज्जनेन निश्वासोच्छ्वासप्रतिरोधनेन विहिंसनस्य प्रसिद्धत्वादिति भावः । अत्र गङ्गोदके अमरावतीप्रतिफलनाध्यवसितं द्वारवतीकारितमज्जनं प्रति अमरावतीकृताष्टवसुधारणाध्यवसितधनगोपनस्य हेतुत्वप्रतीत्या हेतूत्प्रेक्षा । प्रथमकल्पे तु गोपनस्य फलत्वप्रतीत्या फलोत्प्रेक्षा अपह्नवातिशयोक्तिभ्यामुत्थापितेति सङ्करः ॥ ७९ ॥

**अधो विसर्पन्मणिगोपुराग्रमणिप्रभालीमयशृङ्खलासु ।**
**व्यालम्बिता या वरणाभिगुप्ता निधिः किलास्ते[1] निखिलाद्भुतानाम् ॥**

अध इति—या द्वारवती । अधः अधोभागे भूतलादिप्रासादाग्रपर्यन्तस्य कृत्स्नस्य नगरस्य पादस्थान इति भावः । विसर्पन्तीनां प्रसरन्तीनां मणिगोपुराग्रमणिप्रभाणां मणिमयानां इन्द्रनीलमणिविकाराणां गोपुराग्राणां पुरद्वारवर्याणाम् । "पराध्याग्रप्राग्रसरप्राग्राग्र्याग्रीयमग्रियम्" इत्यमरः । मणिप्रभाणां इन्द्रनीलमणिच्छवीनां याः आल्यः पङ्क्तयः तन्मयासु तदात्मिकासु शृङ्खलासु निगलेषु कालायसीष्विति भावः । व्यालम्बिता निबद्धा । अथ च वरणैः प्राकारैः "प्राकारो वरणस्सालः" इत्यमरः । अभिगुप्ता रक्षिता । यथा नास्माद्देशादन्यत्रापसर्पति तथा निरुद्धेत्यर्थः । निखिलानां समस्तानां अद्भुतानामाश्चर्याणाम् । विजातीयविभवौन्नत्यादिविविधमहातिशयानामित्यर्थः । निधिः किल शेवधिरिव । आस्ते वर्तते । "आस उपवेशने" इति धातोरात्मनेपदे लट् । अमानुषतया असंभावितानि यानि यान्यद्भुतानीह परिदृश्यन्ते न तादृशान्यन्यत्र क्वापि दृश्यन्त इति

[1] G. कलास्ते.

भावः । अत्र नगर्यामद्भुतनिधित्वसंभावनादुत्प्रेक्षा । मणिप्रभाल्यां शृङ्खलात्वारोपरूपरूपकानुविद्धेति संकरः ॥ ८० ॥

**शङ्के यदुत्तुङ्गशिरोगृहेषु कण्डूविनोदाय कषन् कपोलौ[1] ।**
**महेन्द्रदन्ती मदपङ्कलग्नैः सपद्मको[2] भाति सरोजरागैः ॥ ८१ ॥**

**शङ्क इति**—महेन्द्रदन्ती ऐरावतः । यस्याः द्वारवत्याः उत्तुङ्गेषु उन्नतेषु स्वर्लोकातिशायिष्विति भावः, शिरोगृहेषु चन्द्रशालासु । कण्डूविनोदाय कण्डूत्यपनोदनाय । कपोलौ निजगण्डदेशौ । कषन् घर्षयन् सन् । मदपङ्केषु मदजलकर्दमेषु निजकपोलगतेष्वीषद्घनीभूतेष्विति भावः । लग्नैः संक्रान्तैः घर्षणाभिघातेन स्थानभ्रंशमवाप्य कपोलमदपङ्कच्छुरितैरित्यर्थः । सरोजरागैः पद्मरागमणिभिः । सपद्मकः बिन्दुजालकोपेतः । "पद्मकं बिन्दुजालकम्" इत्यमरः । लोहिताकारबिन्दुजालमण्डित इवेति भावः । सपत्रक इति पाठे सपत्रकः पत्रकैः कपोलतललेखनीयकाश्मीरपत्राङ्कुरैरुपेत इवेत्यर्थः । भाति भासते । "भा दीप्तौ" इति धातोर्लट् । इतीति शेषः । इत्येवं शङ्के संभावयामि । अत्र स्वाभाविकातिलोहितबिन्दुजालोपलक्षिते मसृणतरघुसृणपरिकलितपत्राङ्कुरे वा दिव्यहस्तिनि कण्डूविनोदार्थनिघृष्टद्वारवतीप्रासादप्रतिलग्नपद्मरागमणिमालामण्डितत्वसंभावनात् उत्प्रेक्षा, कण्डूविनोदप्रवृत्तस्यानाशंसितमणिमालामण्डनलाभात् प्रहर्षणं, अप्रस्तुतकरिमण्डनादिना प्रस्तुतप्रासादानामद्भुतमणिगणखचितत्वप्रतीत्या अप्रस्तुतप्रशंसा, ततश्च लोकातिशायिविभवातिशयप्रतीत्या चोदात्तः, असंबन्धे सम्बन्धवर्णनात् सम्बन्धातिशयोक्तिश्चेति संसृष्टिसंकरौ चेति यथासंभवमूहनीयम् ॥ ८१ ॥

**आरामसीमासु [3]महीरुहाणामम्भोजबन्धौ विचरत्यधस्तात् ।**
**यत्रातपत्राणि यदूद्वहानां प्रायेण नु प्राभवचिह्नमात्रम् ॥ ८२ ॥**

**आरामेति**—यत्र द्वारवत्याम् । अम्भोजबन्धौ रवौ । आरामसीमासु उद्यानप्रदेशेषु । महीरुहाणां तरूणाम । अत्युन्नततया स्वर्गातीतस्कन्धशाखोपेतानामिति

[1] G. कपोले.
[2] G. सपत्रको.
[3] A[1]. महीसुराणां.

भावः । अधस्तात् अधोदेशे स्कन्धशाखादीनामिति भावः । विचरति सञ्चरति सति । यदूद्वहानां यादवश्रेष्ठानाम् । उपदर्शितोद्यानतरुच्छायातिरोहिततदुपरितन-प्रासादसंचरणशीलानां प्रकृष्टयादवानामिति भावः । आतपत्राणि छत्राणि । प्रायेण प्रायशः । प्राभवस्य प्रभुत्वस्य चिह्नमात्रं नु द्योतकमेव खलु । प्रासादानां सूर्यमण्डलातिगामितया उपरि छत्रानुपयोगात् अधोगतरविरश्मीनामुक्तविध-तरुच्छायातिरोहिततयाधः छत्रधारणस्य चाप्रवृत्या पारिशेष्यात् छत्रधारणं प्राभवमात्रव्यञ्जकम् ; न पुनरातपत्राणां आतपत्राणादातपत्राणीत्यन्वर्थानीति भावः । हीनानामधस्सञ्चरणस्यापि संभवात् प्रायेणेति । अत्र सर्वलोकप्रसिद्धतया छत्राणामातपाद्रक्षणप्राभवद्योतनयोर्द्वयोरेकतरप्राभवद्योतकत्वमात्रमूरीकृत्यातपात् परित्राणरूपार्थस्य मात्रपदेनार्थिकप्रतिषेधात् परिसंख्यालङ्कारः । "एकस्य वस्तुनः प्राप्तावनेकत्रैकदा इति [यदि] । एकत्र नियमः सा हि परिसंख्या निगद्यते ॥" इति लक्षणात् ॥ ८२ ॥

**मनोज्ञमन्दस्मितचन्द्रिकाभिश्शश्वद्द्रवद्भिश्शशिकान्तकुम्भैः ।**
**यत्नं विना यत्र विलासवत्यस्सिञ्चन्ति लीलावनबालसालान् ॥८३॥**

**मनोज्ञेति**—यत्र द्वारवत्याम् । विलासवत्यः तरुण्यः । मदनमदायत्तमन्द-हासाद्यञ्चिता उद्यानपालिका इति भावः । मनोज्ञानि मञ्जुलानि मन्दस्मितान्येव चन्द्रिकास्ताभिः । शश्वत् प्रतिपदम् । द्रवद्भिः स्यन्दमानैः । सर्वतः प्रस्यन्दि-सलिलपूर्णैरिति भावः । शशिकान्तकुम्भैः चन्द्रकान्तमणिमयकलशैः । लीलावनस्य प्रमदवनस्य बालसालान् बालपादपान् । तरुणानां तरूणां रूढमूलतया प्रतिपद-सलिलसेकानपेक्षणादिति भावः । "अनोकहःकुटस्सालः" इत्यमरः । यत्नं विना दूरतः सलिलाहरणादिक्लेशलेशं विनैवेत्यर्थः । सिञ्चन्ति आलवालमापूरयन्तीत्यर्थः । "षिच सेचने" इति धातोर्लट् । उद्यानपालिकाकरगतानां कलशानां चन्द्रकान्त-शिलामयतया चन्द्रिकातिशायिकामिनीमन्दस्मितप्रसरणमात्रेण सलिलभरितत्वेन सलिलान्तरगवेषणासंभवादिति भावः । ततश्च चेटीनामेवेदृशत्वे किमु वक्तव्यं राजमहिषीणामिति उद्यानसेचकानामेव कलशानामीदृशत्वे किमुत राजोपभोग-साधनानामिति च नगरस्योत्तमनागीभरितत्वनिरतिशयविभवत्वादिकं व्यज्यते ।

अत्र मन्दस्मितचन्द्रिकाभिरिति रूपकं, ताभिः शश्वद्द्रवद्भिरिति हेत्वलंकारः, शशिकान्तकुम्भैरिति पदार्थहेतुकं काव्यलिङ्गं, यत्नं विनेति प्रहर्षणं, विलासवत्य इति परिकराङ्कुरः, उदात्तालंकारश्चेति विभावनीयम् ॥ ८३ ॥

[1]प्रवालमुक्ताफलपद्मरागवैडूर्यगारुत्मतवज्रनीलैः ।
क्रीणन्ति गोमेधकपुष्यरागैः फलानि यस्यां किल पौरबालाः ॥८४॥

प्रवालेति—यस्यां द्वारवत्याम् । पौराः पुरे भवाः बालाः कुमाराः कुमार्यश्च । निरवधिकविभववत्तया जिह्वाचापल्यात्क्रय्यमूल्ययोस्तारतम्यमविचारयन्तः सर्वेऽपीति भावः । प्रवालानि विद्रुमाः मुक्ताफलानि फलाकाराणि मौक्तिकानि पद्मरागाः कुरुविन्दमणयः वैडूर्याणि विडूरदेशोद्भूतानि मार्जाराक्षिसवर्णानि रत्नानि गारुत्मतानि मरतकानि वज्राणि हीरकमणयः इन्द्रनीलानि नीलमणयश्च तैः । तथा गोमेधकैः गोमूत्रसदृक्षैः रत्नैः पुष्यरागैः दाडिमकुसुमसच्छायैः मणिभिः । एवं नवविधैः रत्नैः बहुकुटुम्बिकृषीवलसदनप्राङ्कणेषु राशीकृतकुलुत्थकोद्रव कङ्गुप्रमुखक्षुद्रधान्यसदृक्षैः सावज्ञमञ्जलिभिः असकृदुपगृहीतैरिति भावः । फलानि जम्बूबदरीमुखानि । प्रतिसदनद्वारोपकण्ठं प्रत्येकनामग्रहणपूर्वं विक्रेत्रीभिरुच्चैःप्लुतेनोद्घोषितानीति भावः । क्रीणन्ति किल उपाददते खलु । "डु क्रीञ् द्रव्यविनिमये" इति धातोः कर्तरि लट् । किलेति प्रसिद्धिद्योतकम् । तेन द्वारवतीसंपत्तेर्लोकातिशायित्वं व्यज्यते । उदात्तालंकारः । अनर्घैः रत्नैः अल्पफलविनिमयादधिकेन न्यूनपरिवृत्तिश्च । "परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथः" इति लक्षणात् ॥ ८४ ॥

अथ नगरवर्णनानन्तरं तद्वास्तव्यं भगवन्तं श्रीकृष्णं उपवर्णयितुमारभते—

तामावसन् वासवधामरम्यां [2]तत्तादृशैश्वर्यनिधानसीमाम् ।
ररक्ष रक्षोभयतस्त्रिलोकीं सर्वामिमां सात्वतसार्वभौमः ॥ ८५ ॥

तामिति—सात्वतानां यादवानां सार्वभौमः सर्वभूमीश्वरः श्रीकृष्णः । वासवस्य इन्द्रस्य धाम्नः स्थानभूतात् अमरावत्याः अपि रम्यां अतिमनोहराम् ।

[1] A[1]. प्रवालरक्ता.

[2] G. तत्तादृशैर्यस्य.

अथ च तत्तादृशानां अनिर्वचनीयानां ऐश्वर्याणां धनकोशवसनाभरणादिनिखिलसंपदां निधानस्य विन्यासस्य सीमां परमस्थानभूताम् , वाङ्मनसातिशायिविविधविभवपरिपूर्णामित्यर्थः । तेनालकातिशायित्वं व्यज्यते । तां पूर्वोदितां द्वारवतीम् । आवसन् अधिवसन् । आङ्पूर्वाद्वसतेर्लटः शतृप्रत्ययः । तद्योगे "उपान्वध्याङ्वसः" इति तामित्यस्य कर्मसंज्ञायां कर्मणि द्वितीया । त्रिलोकीं त्रैलोक्यं अखिलानि भुवनानीति भावः । यद्वा लोकशब्दस्य जनपरतया त्रिविधानां शत्रुमित्रोदासीनतया प्रसिद्धानां लोकानां जनानां समाहारः, तामित्यर्थः । अवैषम्येण सर्वानिति भावः । रक्षोभयतः राक्षससकाशात् भीतेः । रक्षःपदस्य हिंस्रमात्रोपलक्षकतया सर्वविधादपि भयादित्यर्थः । ररक्ष पालयामास । "रक्ष पालने" इति धातोर्लिट् । स्वयमखिलदुष्टनिग्रहपूर्वकभूभारोत्तारणार्थावतीर्णस्तदेव कर्म निरवर्तयदिति भावः । ॥ ८५ ॥

अथ कविः पूर्वप्रपञ्चितोच्चावचमङ्गलोपि साक्षात् भगवत्प्रपञ्चनावसरे— "पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम्" इति स्मृत्या परममङ्गलात्मतया भगवन्तमनुचिन्तयन् अपरिमेयभगवच्चरितवर्णनासमर्थत्वपरिज्ञानसंपन्ननिर्वेदोऽपि भगवत्याः श्रुतेरेव तच्चरितोपवर्णनासमर्थत्वे किमु वक्तव्यं अस्मादृशानामित्यसंतोषं सार्वत्रिकं मन्वानः सन्तुष्यन्विनयमाचष्टे—

**वरं नवोढेव पुराणवाणी व्यनक्ति यं वाङ्मनसातिदूरम् ।**
**परात्परं तं परिमेयवाचो वयं कथं वर्णयितुं प्रगल्भाः ॥ ८६ ॥**

**वरमिति**—पुराणी प्राक्तना अकृत्रिमेति यावत् । वाणी वाक् आम्नायमयीत्यर्थः । वाक् च मनश्च वाङ्मनसे "अचतुर" इत्यादिना अजन्तता । तयोः अतिदूरं अत्यन्तागोचरम् । आगमैरप्यपरिच्छेद्यविभवमित्यर्थः । यं श्रीकृष्णम्, परब्रह्मस्वरूपमिति भावः । नवोढा लज्जाभयपराधीनतया प्रसिद्धा मुग्धा निजनायकनामनिर्देशाद्यसमर्थेति भावः । वरं स्वीयं भर्तारमिव । व्यनक्ति व्यञ्जनया प्रपञ्चयति । न पुनः स्पष्टमभिधत्ते । विपूर्वात् "अञ्जू व्यक्तिम्लक्षणकान्तिगतिषु" इति धातोः परस्मैपदे लट् । लोके या काचन नवोढा कतमस्ते पतिः कीदृग्गुणः इत्यनुयुक्ते लज्जातिशयाद्विस्पष्टमभिधातुमक्षमा साकूतविलोकनव्यङ्ग्यवचनादिना

नायं नासाविति तदन्यनिषेधेन च निजनायकमभिव्यनक्ति एवं भगवती श्रुतिरपि यस्य स्वरूपं साक्षादभिधातुं अक्षमा सती अन्यवचनोपन्यासरूपतया "भृगुर्वै वारुणिः" इति हेतूपन्यासरूपतया "यतो वा इमानि भूतानि" इति अतथाभूतस्य तथात्वप्रतिपादनपूर्वं "ब्रह्मपुच्छं प्रतिष्ठा" इत्यन्तेन "नेति नेति" इत्याद्यन्यनिषेधमुखेन च कृच्छ्रात् द्योतयति तत्तादृशमिति भावः। परात् परिदृश्यमानप्रपञ्चादन्यस्माज्जगत्कारणमूर्तेरपि। परं अतिरिक्तमतिशयितं च। पृथिव्यादिप्रकृत्यन्तनिखिलतत्त्वातीतं सच्चिदानन्दलक्षणब्रह्मात्मकमिति भावः। तं श्रीकृष्णम्। वर्णयितुं तत्वतः तत्स्वरूपमभिधातुम्। परिमेयाः अल्पतराः वाचः येषां तादृशाः। वयं मादृशाः कवयः। कथं प्रगल्भाः कुतः समर्थाः भवेम। न भवाम एवेति भावः। तथाविधप्रतिभायाः काप्यसंभवात् न कोऽपि भगवद्गुणवर्णनपर्याप्तो भवति। इत्थं सर्वेषामनधिकारित्वे श्रुतिमेव निदर्शनीकृत्य यत्किञ्चिच्चरितप्रपञ्चनेन प्राञ्चः कवयः कृतार्था जातास्तथाहमपि प्रवृत्त इत्याशयः। अत्र श्रुतेरसमर्थत्वोपन्यासादन्येषामसामर्थ्याभिधायिकैमुत्यार्थसंसिद्धिरूपार्थापत्त्या लब्धात्मा अन्योन्यानानुरूप्यवर्णनरूपो विषमालंकारः। नवोढेवेत्युपमया संसृष्टिः॥ ८६॥

अथ कविः प्राधान्येन प्रबन्धप्रतिपाद्यरुक्मिणीपरिणयप्रयोजकीभूतां भगवतस्तद्विषयिणीमुत्कण्ठामुत्तरसर्गे सप्रपञ्चं प्रतिपिपादयिषुः आदौ चारमुखेन परिज्ञातरुक्मिणीरूपलावण्यः तस्याः स्वस्मिन्ननुरागापरिज्ञानेन तद्विविदिषातरङ्गितान्तरङ्गस्य उत्कण्ठाविनोदनार्थकविविक्तवासाभिलाषिणः श्रीकृष्णस्य विप्रलम्भशृङ्गारोद्दीपकवसन्तमन्दपवनपरभृतषट्पदसर्वर्तुकुसुमादिसमृद्धप्रमदवनप्रवेशं चतुर्भिः कुलकेनाह—

**कदाचिदेकान्तकृतादरोऽसौ दामोदरो दारुकदत्तहस्तः।**
**सर्वर्तुसान्निध्यसमेधमाननेत्रोत्सवं निष्कुटमाससाद॥ ८७॥**

कदाचिदिति—दामोदरः दाम रज्जुः यमलार्जुनभङ्गावसरे यशोदया निबद्धमित्यर्थः। उदरे मध्यदेशे यस्य तादृशः। असौ कृष्णः। एकान्ते रहसि, विविक्तदेशावस्थान इति भावः। कृतः विहितः आदरः अभिनिवेशो येन तादृशस्सन्। दारुकेण दारुकनाम्ना सूतेन दत्तौ समर्पितौ

हस्तौ पाणी हस्तावलंबनाय प्रह्वाखिलाङ्गेन दारुकेण प्रदिष्टाविति भावः । यस्मै तादृशश्च सन् । सर्वेषामखिलानामृतूनां वसन्तादीनां षण्णां सान्निध्येन समसमयसन्निवेशेन समेधमानः प्रतिपदमभिवर्धमानः नेत्रयोर्नयनयोः उत्सवः प्रीत्यतिशयः यत्र तादृशम् । निखिलोपभोगसाधनाखिलकालसंभावितसकलफल-कुसुमादिसमृद्ध्या सर्वजनानन्ददायकमिति भावः । निष्कुटं निजगृहोद्यानम् । "गृहारामस्तु निष्कुटः" इत्यमरः । आससाद अवाप । आङ्पूर्वात् "षद्लृ विशरणगत्यवसादनेषु" इति धातोः कर्तरि लिट् । अत्र एकान्तकृतादर इत्यनेन नायिकाविषयकोत्कण्ठाभिव्यक्त्या सर्वर्तुसान्निध्येत्यादिनिष्कुटविशेषणेन च विर-होद्रेककारित्वाभिव्यक्त्या परिकरालङ्कारः । वृत्त्यनुप्रासेन संसृष्टिः । तेन दामोदर इति विशेषणार्थस्य प्रकृतानुपयोगादपुष्टार्थताशङ्का निरस्ता । तस्याः प्रासयमका-दावदोषत्वस्य सर्वसम्मतत्वात् ॥ ८७ ॥

**मन्दानिलान्दोलितमञ्जुवल्लीडोलाविहारोदितदोहलाभिः ।**
**भृङ्गीभिरङ्गीकृतमारवीर[1]सङ्गीतभङ्गीसरसोपकण्ठम् ॥ ८८ ॥**

मन्देति—मन्दानिलेन मलयपवनेन आन्दोलिता चालिता मञ्जुः मनोज्ञा वल्ल्येव लतैव डोला प्रेङ्खोलिका । "डोलाप्रेङ्खोलिके समे" इत्यमरः । तस्यां विहारेण क्रीडया उदितः संजातः दोहलं उत्तेजनं यासां तादृशीभिः डोलिका विहृतिद्विगुणितोत्साहाभिरिति भावः । भृङ्गीभिः भ्रमरयुवतीभिः कर्त्रीभिः । अङ्गीकृताभिः स्वीकृताभिः गातुमुपक्रान्ताभिरित्यर्थः । मारो मदन एव वीरः शूरः सर्वविजयित्वेन प्रख्यात इति भावः । तस्य सङ्गीतस्य अपदानगीतेः भङ्गीभिः धोरणीभिः सरसः रमणीयः श्रवणानन्दसन्दायीति भावः । उपकण्ठः अभ्यर्णदेशः यस्य तादृशम् । निष्कुटमाससादेति पूर्वेणान्वयः । अत्र वल्ल्यां डोलात्वरूपणेन भृङ्गीषु नारीत्वरूपणस्य गम्यतया एकदेशविवर्तिरूपकेण पूर्ववत् साभिप्रायतया परिकरेण वृत्त्यनुप्रासेन च संसृष्टिः ॥ ८८ ॥

[1] A'., G. मारशौर्य—

**प्रसूनलूपादनखेन्दुकान्तिसन्दोहसंपर्कचमत्क्रियाभिः ।**
**निष्यन्दमानैर्निकटेन्दुकान्तैः[1] नित्यं नदीमातृकतां भजन्तम्[2] ॥८९॥**

**प्रसूनेति**—प्रसूनलूवां कुसुमापचयकारिणीनां वधूनां पादनखाश्चरणनखरा एव इन्दवः चन्द्रास्तेषां कान्तिसन्दोहेन किरणनिकुरुम्बेन संपर्कस्य संसर्गस्य चमत्क्रियाभिः शिलाभ्यः शीतलसलिलनिष्पादकशक्तिविशेषैः निमित्तभूतैः । नितरां अत्यन्तं स्यन्दमानैः द्रवद्भिः सङ्घशः सलिलधारामुद्गिरद्भिरिति भावः । निकटे अन्तिके वर्तमानैरित्यर्थः । तरूणामिति शेषः । सलिलसेचनसापेक्षतरुगुल्मलताशाल्यादिसविधालवालसंघटितैरिति भावः । इन्दुकान्तैः चन्द्रकान्तशिलाभिः । नित्यं अनवरतमहोरात्रम् । चन्द्रासान्निध्येऽपि नखचन्द्राणां सदा सन्निहितत्वादिति भावः । नदीमातृकतां वर्षधाराद्यनपेक्षया नदीजलाभिवृद्धसस्यफलादिसमृद्धताम् । भजन्तं प्राप्नुवानम् । निष्कुटमिति पूर्वेणान्वयः । अत्र पुष्पापचयकारिणीनां नखेन्दुकिरणसङ्गसङ्गतोदकमात्रेण नदीमातृकत्वायोगेऽपि तद्वर्णनादतिशयोक्तिः । रूपकोदात्ताभ्यां संसृष्टिः ॥ ८९ ॥

**मन्दारपुष्पस्तवकापदेशैर्माङ्गल्यकुम्भैर्मधुवारिपूर्णैः ।**
**मारावनीनायकशेखरस्य वीराभिषेकं विदधानमारात् ॥ ९० ॥**

**मन्दारेति**—मन्दारपुष्पाणां मन्दारकुसुमानां स्तबका गुच्छा इत्यपदेशः कपटो येषां तादृशैः । मधूनि मकरन्दा एव वारीणि तैः पूर्णैः भरितैः । माङ्गल्यकुम्भैः मङ्गलार्थकलशैः । मङ्गलाधायकमन्त्रजालाभिमन्त्रितैरिति भावः । मारो मदन एव अवनीनायकशेखरः राजाधिराजशिखामणिः तस्य । वीराभिषेकं जगदेकवीरस्यैवाधिराज्यार्हतया वीराभिषेकपदेन पट्टबन्धपूर्वकराज्याभिषेकस्यैव निर्देशः । आरात् समन्तात् । विदधानं कुर्वन्तमिव स्थितम् । निष्कुटमिति पूर्वेणान्वयः । रूपकापह्नवाभ्यामनुविद्धा स्वरूपोत्प्रेक्षा व्यञ्जकाभावात् गूढा ॥ ९० ॥

[1] G. निकटेषुकान्तैः.

[2] A¹., G. दधानम् . It is worthy of note that A¹ notices the other reading also.

अथ तमेव निष्कुटं यत्तद्भ्यामेकान्वयेन प्रपञ्चयति चतुर्दशभिः निलीयेत्यादिभिः—

**निलीय पुष्पस्तबकोदरेषु निष्पन्दपुष्पन्धयकैतवेन ।**
**निद्राति यस्मिन् निभृतं तरूणां छाया रुणोल्लङ्घनजाङ्घिकानाम् ॥९१॥**

निलीयेति—यस्मिन् निष्कुटे । अरुणस्य सूर्यस्य । "मिहिरारुणपूषणः" इत्यमरः । उल्लङ्घने अतिक्रमणे विषये जाङ्घिकानां प्रजविनाम् । 'तेन चरति' इत्यर्थे ठक्प्रत्ययः । "जङ्घालोऽतिजवस्तुल्यौ जङ्घाकरिकजाङ्घिकौ" इत्यमरः । सूर्यमण्डलमतीत्य प्रवृद्धानामिति भावः । तरूणां पादपानाम् । छाया अनातपः । संज्ञानाम्न्याः सूर्यपत्न्याः प्रतिरूपिका छायाख्या सूर्यपत्नी च । सा च स्वभर्तुः सूर्यस्याभिमुखावस्थितिमपहाय यत्किञ्चिदन्तरतः कृत्वैव प्रवर्तमाना साम्प्रतं तादृशमन्तरमलभमानेति भावः । पुष्पस्तबकानां कुसुमगुलुच्छानां उदरेषु मध्यदेशेषु । निष्पन्दानां अचञ्चलानां वृक्षादबहिर्गतानामिति भावः । पुष्पंधयानां मधुकराणां कैतवेन व्याजेन । पुष्प उपपदे "धेट् पाने" इति धातोः "उग्रंपश्येरंमदपाणिन्धमाश्च" इति चकारादनुक्तसमुच्चयार्थादत्र खश्प्रत्ययः । "अरुर्द्विषदजन्तस्य मुम्" इति पुष्पपदस्य मुमागमश्च । [निलीय] तिरोधाय । [निभृतं] निश्शङ्कं निर्भयं निरपत्रपं च सूर्योर्ध्वगतोत्तानगुच्छगतायाः सूर्याभिमुख्यसंभावनाया एवाभावादिति भावः । निद्राति स्वपिति । निपूर्वात् "द्रा कुत्सायाम्" इति धातोर्लट् । तरूणां छायावश्यंभावे सूर्यस्य तरुषण्डादधोगमनेन भूमौ छायाया अदर्शनेन तेजोमयेषूपरितनलोकेष्वसंभवाच्च क्वेयमगादिति विचारे तत्तच्छायायास्तत्संबद्धाया एव दूरान्तिकयोर्गमनागमनयोः दृष्टचरत्वेन सर्वथा तरुसम्बद्धयैव छायया भवितव्यमिति निश्चिते तदीयकुसुमस्तबकोदरगतेषु नीलतया छायासदृक्षेषु षट्पदेषु परिदृश्यमानेषु अन्यत्रोपचयापचयशालितया दृष्टशक्तिस्तरुच्छायैव किमु कुसुमस्तबकमध्यगता विभातीति संभाव्यत इति भावः । छाया स्वपत्याभिमुख्यपरिजिहीर्षया एकान्तभूतकुसुमोदरेषु निलीना किमिति च व्यज्यते । अत्र षट्पदेषु तत्त्वमपह्नुत्य छायात्वारोपादपह्नवालङ्कारः ॥ ९१ ॥

[1]तत्तादृशामोदतरङ्गिताभिरालिङ्गिताः कल्पलतावलीभिः ।
उच्चावचा यत्र सुखोन्नतत्वप्रख्यातिभाजो विटपाः प्रथन्ते ॥ ९२ ॥

तत्तादृशेति-- यत्र निष्कुटे । उच्चावचाः नानाविधाः । "उच्चावचन्नैकभेदम्" इत्यमरः । विटपाः शाखाः । अन्यत्र विटान् पान्तीति व्युत्पत्त्या विटसार्वभौमा इत्यर्थः । तत्तादृशैः अनिर्वचनीयैः आमोदैः परिमलैः हर्षैश्च तरङ्गिताभिः भरिताभिः । कल्पलतानां सुरतरुशाखानां आवलीभिः श्रेणीभिः । स्त्रीलिङ्गात् युवतिपङ्क्तिभिरिति व्यज्यते । आलिङ्गिताः संवलिताः आश्लिष्टाश्च सन्तः । द्वारवतीनिष्कुटप्ररूढपादपानां स्वर्गादप्युच्छ्रितत्तया तत्रत्यनन्दनोद्यानगतकल्पवल्लीसंवलनस्य संभावितत्वादिति भावः । सुतरां अत्यन्तं खे गगने उन्नतत्वेन उच्छ्रिततया प्रख्यातिं प्रसिद्धिं भजन्तीति तादृशाः । अन्यत्र सुखे आनन्दे विषये उन्नतत्वेन प्रख्यातिं भजन्तीति तादृशाः । निरतिशयविषयोपभोगवत्त्वेन प्रसिद्धा इति भावः । प्रथन्ते विख्याताः भवन्ति । अत्र प्रस्तुतेन पादपवृत्तान्तवर्णनेनाप्रकृतकामुकवृत्तान्तप्रतीत्या समासोक्तिरलङ्कारः ॥ ९२ ॥

अथ—"तरुगुल्मलतादीनामकाले कुशलैः कृतम् । पुष्पाद्युत्पादकं कर्म तद्दोहलमितीर्यते ॥" इति, तथा—"अशोकश्चरणाहत्या वकुलो मुखशीधुना । आलिङ्गनात्कुरवकस्तिलको वीक्षणेन च ॥ करस्पर्शेन माकन्दो मदरागेण चम्पकः । सल्लापतः कर्णिकारः सिन्दुवारो मुखानिलात् ॥ गत्या प्रियालो नितरां नमेरुश्श्वसितेन च । स्त्रीणां भजन्ति विकृतिं दश दोहलभूरुहाः ॥" इत्यालङ्कारिकसंप्रदायप्रसिद्धान् दशविधान् दोहलवृक्षान् विविच्य प्रपञ्चयति—

दूरादहो [2]दोहलदायिनीनां पादाम्बुजानां परिचिन्त्य बाधाम् ।
संवाहनायेव शयानशोकाः प्रसारयन्ते किसलानि यत्र ॥ ९३ ॥

दूरादित्यादिना—यत्र निष्कुटे । अशोकाः वञ्जुलाः तरवः शोकरहिताश्चेति व्यज्यते । तेन परकीयदुःखासहिष्णुत्वं लभ्यते । दोहलं अकालकुसुमाद्युत्पादक-

[1] G. तत्तादृशैर्मो.

[2] G. दोहन.

चिकित्साविशेषं ददति वितरन्तीति तादृशीनाम्। अशोकदोहलीभूतपादताड नार्थमभ्यर्णमागतानामिति भावः। पादाम्बुजानां कमलवन्मृदुलानां चरणानाम्। बाधां व्यथाम्, तरुतलाघातजातामिति भावः। परिचिन्त्य विचिन्त्य। श्रेयसे यतमानानामासामीदृशी व्यथास्माभिरेव निवार्येति निश्चित्येति भावः। संवाहनायेव उपमर्दनाय किल। संवाहनेन व्यथामुपशमयितुमेवेत्यर्थः। निजकरस्थानीयानि किसलानि प्रवालानि। "किसालं किसलं किसम्" इति श्रीहर्षः। दूरात् वृक्षाद्व्यवहितदेशे कामिनीचरणप्रान्त इति भावः। प्रसारयन्ते प्रेरयन्ति। प्रपूर्वात् "सृ गतौ" इति धातोः णिजन्तादात्मनेपदे लट्। अहो अद्भुतम्। अचेतनानामपि परदुःखासहिष्णुता प्रत्युपकारकारिता चेति महदद्भुतमिति भावः। अत्र तरुताडनजनितव्यथानिमित्तकतयाध्यवसितकिसलयरूपकरदूरप्रसारणं प्रति दोहलदायिनीपादसंवाहनमफलमेव फलतया निर्दिष्टमिति फलोत्प्रेक्षा किसलयेषु करत्वरूपणेन अशोकेषु सानुकम्पपुरुषत्वरूपणस्य गम्यतया एकदेशविवर्तिरूपकेणातिशयोक्त्या चानुविद्धेति सङ्करः॥ ९३॥

अथाशोकद्वैविध्येऽप्ययमेव दोहलविशेष इत्यभिप्रायेणाह—

**शङ्के पदाम्भोजतलाभिघातात्[1] कङ्केलिसालैरुपदर्शितानाम्।**
**करस्फुरत्कान्तिमुषां दलानां कान्ताजनो यत्र करोति भङ्गम्॥९४॥**

**शङ्क इति**—यत्र निष्कुटे। कान्ताजनः स्त्रीलोकः। पदाम्भोजयोः स्वीयचरणकमलयोः तलेन अधःप्रदेशेन अभिघातात् अशोकदोहलरूपात् अकार्यकारिणः शिक्षारूपाच्चेति भावः। कङ्केलिसालैः रक्ताशोकैः। पादाहतिदोहलितैः तस्कराच्छादनकर्मकारितया तत्प्रदर्शनाय पादाभिहतैश्चेति भावः। उपदर्शितानां प्रपञ्चितानां बहिर्विसृष्टानां च। करयोः स्वीयपाण्योः स्फुरन्तीः प्रसरन्तीः कान्तीः प्रभाः संपद्रूपाः मुष्णन्ति अपहरन्ति सदृशीभवन्ति चोरवृत्त्या गृह्णन्तीति च, तादृशानां सन्ततकरधृतानामप्यपहर्तृतया महासाहसिकानामिति भावः। दलानां अशोकपल्लवानाम्, चोराणामिति गम्यते।

[1] G. पदाम्भोजलताभिघातां.

भङ्गं छेदं, नखरविलेखनादिविहारं, अवतंसार्थापचयं वा। करपादाद्यङ्गच्छेदरूप दण्डमिति च गम्यते। करोति कुरुते। इतीति शेषः। एवं शङ्के संभावयामि। अत्र कान्ताजनपादतलसंपर्कदोहलवशात् सद्यःसमुदित्वराणां किसलयानां कामिनीजनकृतविभ्रमचेष्टारूपायामवतंसार्थादानक्रियायां वा कामिनीकरतलगतां कान्तिं चोरवृत्त्यापहृत्य तरुगर्भनिलीनानां कामिनीकृतपादप्रहारेण प्रक्षुभिततत्प्रच्छादककङ्केलितरुप्रत्यर्पितानां च तेषां पल्लवानां खण्डनरूपक्रियातादात्म्यसंभावना स्वरूपोत्प्रेक्षा। वृत्त्यनुप्रासेन संसृष्टिः ॥ ९४ ॥

**[1]प्रसूनलावीजनपाणिपद्मस्पर्शोत्सवाय स्पृहयन्निवारात्।**
**पुनःपुनर्यत्र रसालसालः पुष्णाति पुष्पस्तबकाननेकान् ॥ ९५ ॥**

**प्रसूनेति**—यत्र निष्कुटे। रसालसालः सहकारतरुः। प्रसूनानि लुनन्ति छिन्दन्तीति प्रसूनलाव्यः पुष्पापचयकारिण्यो वनिताः। कर्मण्युपपदे लुनातेः "कर्मण्यण्" इति अण्प्रत्यये "टिड्ढाणञ्" इति ङीप्। ता एव जनाः तेषां पाणिपद्मस्य करकमलस्य स्पर्शः संपर्कः स एव उत्सवः तस्मै। पुनःपुनः असकृत्। स्पृहयन्निव अभिलषन्निव। "स्पृहेरीप्सितः" इति संप्रदाने चतुर्थी। अनेकान् बहून्। सकृत्पुष्पितेष्वपचितेषु च पुनरन्ये पुष्पस्तबकाः, तेष्वपचितेषु ततोऽन्य इत्यनेकवारोद्गतानिति भावः। पुष्पस्तबकान् कुसुमगुच्छान्। आरात् समीपे। अवनितलस्थिता एव ता यथा कुसुमान्यपचिनुयुस्तथेत्यर्थः। अन्यथारोहणादिप्रयासभयान्नापचयेयुरिति मनीषयेति भावः। पुष्णाति उत्पादयति। "पुष पुष्टौ" इति धातोर्लट्। तरूणां सकृत्सूनोत्पादनस्वाभाव्येऽप्यत्रासकृत् कुसुमोद्गमः असकृत्तत्संग्रहणार्थकामिनीकरसंस्पर्शप्रत्याशाकृतः किमिति भावः। अत्र कामिनीकरस्पर्शस्यैव रसालदोहलत्वेन पुष्पग्रहणार्थकामिनीकरस्पर्शस्यापि पुनः पुष्पोत्पादनदोहलतया तेनापि पुनःकुसुमोत्पत्तौ तदाहरणाय पुनः करस्पर्श इति दोहलाधीनप्रतिपदकुसुमोत्पादने असकृत्कान्ताकरग्रहणाभिलाषहेतुकत्वसंभावना हेतूत्प्रेक्षा ॥ ९५ ॥

[1] A¹. प्रसूनलावीजनपद्मपाणिस्प-

[1]कुरण्डशाखी कुटिलेक्षणानां [2]कुचेषु कूलङ्कषतापशान्त्यै ।
गुलुच्छकुम्भोद्गलितैर्मरन्दैराभाति यस्मिन्नभिषिच्यमानः ॥ ९६ ॥

कुरण्डेति—यस्मिन् निष्कुटे । कुरण्डशाखी कुरवकद्रुमः । कुटिलेक्षणानां कामिनीनाम् । कुचेषु स्तनेषु, स्वस्मै दोहलीभूतपरिष्वङ्गावसरपरिज्ञातसन्तापेष्विति भावः । कूलङ्कषस्य गाढतरस्य तापस्य सन्तापस्य शान्त्यै अपनोदाय । गुलुच्छात् गुच्छादेव कुम्भात् कलशात् । "गुच्छो गुलुच्छस्तबकः" इति शब्दार्णवः । उद्गलितैः निस्सृतैः आवर्जितैरिति भावः । मरन्दैः मकरन्दैः । अभिषिच्यमानः अभिषेकं कुर्वाण इव । आभाति संभाव्यते । अत्र स्वाभाविकं कुरवकस्य स्वदोहलीभूतकामिनीगाढालिङ्गनसंभूतकलशाकारगुच्छान्मकरन्दधारानिस्सरणं प्रति परिष्वङ्गपरिज्ञातपयोधरप्रौढतापव्यपोहनमफलमेव फलतया निर्दिष्टमिति फलोत्प्रेक्षा । वृत्त्यनुप्रासेन संसृष्टिः ॥ ९६ ॥

हसन्मुखीरिन्दुमुखीस्सलीलमालोक्य पुन्नागगणो यदीयः ।
उत्फुल्लपुष्पस्तबकापदेशादुदीर्णमन्दस्मितवद्विभाति ॥ ९७ ॥

हसदिति—यदीयः यादृशनिष्कुटे भवः । पुन्नागानां केसरवृक्षाणां पुरुषवर्याणां च । "उपमितं व्याघ्रादिभिः" इति उपमितसमासः । गणः समूहः । सलीलं सविलासं यथा भवति तथा । हसन्मुखीः सस्मितवदनाः सभावहसितमालोकयन्तीरिति भावः । इन्दुमुखीः चन्द्रसदृशवदनाः युवतीः । विलोक्य अभिवीक्ष्य । पुन्नागदोहलीभूतं मन्दहासमासाद्येति भावः । भावाविष्करणक्षममन्दस्मितमुद्वीक्ष्येति च प्रतीयते । उत्फुल्लानां विकचानां पुष्पाणां स्तबको गुच्छ इत्यपदेशात् कपटात् । उदीर्णं उद्भूतं मन्दस्मितं मन्दहासः यस्य तादृश इव । विभाति भासते संभाव्यत इति भावः । कामिनीनामनुरागद्योतकमन्दस्मितमालोक्य पुन्नागपदश्लेषप्रतीतः पुरुषवर्यगणोऽपि स्वाभिप्रायप्रपञ्चकमन्दस्मितमतनोत् किमिति भावः । अत्र दोहलीभूतवनितामन्दस्मितसमनन्तरसमुद्भूतकुसुमस्तबकोद्गमे पुन्नागपदश्लेषमूलाभेदाध्यवसितपुरुषर्षभकर्तृकमन्दहासोदञ्चन-

[1] G. कुरुन्द--

[2] A[1]., G. कुचोष्म–

तादात्म्यसंभावना स्वरूपोत्प्रेक्षा कैतवापह्नुतिगर्भा उपमातिशयोक्तिभ्यामनुविद्धेति संकरः ॥ ९७ ॥

**यदृच्छया यत्र विलासवत्यो दृशा स्पृशन्त्यस्तिलकं जडं च ।**
**आपादमाचूडमनङ्गबाणैरातन्वते हन्त हठावकीर्णम् ॥ ९८ ॥**

**यदृच्छयेति**—यत्र निष्कुटे । विलासवत्यः कामिन्यः । तिलकं क्षुरकाख्यं कामिनीकटाक्षवीक्षणदोहलिकं वृक्षविशेषम् । जडं अचेतनं भावेङ्गिताद्यपरिज्ञं च । यदृच्छया सामान्यदृष्ट्या । स्पृशन्त्यः विलोकयन्त्यः सत्यः तावन्मात्रेणेति भावः । आपादं चरणमारभ्य आचूडं शिरःपर्यन्तं आमूलाग्रशाखम् । अनङ्गबाणैः मदनसायकैः कुसुमैरित्यर्थः । युवपक्षे साक्षान्मदनसायकैः हठात् बलात् रभसेन च कामिनीकटाक्षपातस्यातिबलीयस्त्वादिति भावः । अवकीर्णं व्याप्तं आतन्वते वितन्वन्ति । हन्त इत्यद्भुते । अचेतनस्यापि तिलकस्य सचेतनेष्वपि भावानभिज्ञस्यापि जडस्य यादृच्छिकोदासीनदृष्टिपातमात्रादीदृशी दशा चेत् किमु वक्तव्यं सहृदयरसिकविषये सविलासविलोकनं च व्यथयतीति । अतोऽतिशयेनैव व्यथयेदतः कष्टतरमिति भावः । अत्र वर्ण्यानां तिलकानां अवर्ण्यानां अनभिज्ञानां च कामबाणाभिव्याप्तत्वरूपैकधर्मान्वयाद्दीपकालङ्कारः । "वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः" इति तल्लक्षणात् ॥ ९८ ॥

**प्रायः प्रियालः प्रमदाजनानामाकर्ण्य [1]गीतीरमृतैकरीतीः ।**
**सद्यस्स्फुरत्कोरकसङ्गिभृङ्गीसङ्गीतभङ्ग्यानुकरोति यस्मिन् ॥ ९९ ॥**

**प्राय इति**—यस्मिन् निष्कुटे । प्रियालः राजादनो नाम वृक्षः । प्रमदाजनानां योषिताम । अमृतेन सुधया सह एका अभिन्ना तुल्येति यावत् रीतिः भङ्गी यासां तादृशीः अमृतवदास्वादनीया इति भावः । गीतीः गानालापध्वनीन् । आकर्ण्य श्रुत्वा । सद्यः सपदि स्फुरद्भिः विकसद्भिः वराङ्गनागानध्वनेः प्रियालदोहलत्वेन तादृशगानाकर्णनसमकालमेव किसलयकोरककुसुमाद्युत्पत्तौ पौर्वापर्यमनपेक्ष्य सद्यो विकसद्भिरिति भावः । कोरकैः मुकुलैस्सह सङ्गिनीनां मिलितानां तदीयमधु-

[1] A[1]., G. रीतीः

परिमलार्थागतानामित्यर्थः । भृङ्गीणां भ्रमरयोषितां सङ्गीतभङ्ग्यां गानधोरण्या मधुरतरमधुकरीझङ्कारात्मनेत्यर्थः । प्रायः प्रायेण । अनुकरोति अनुवदति गुरूच्चारणानूच्चारणरूपतयाध्येतीवेति भावः । तेन दोहलात् कुसुमोत्पत्तावतिशैघ्र्यं प्रत्याय्यते । अत्र कामिनीगानानुपदप्रवृत्ते दोहलोद्भूतकुसुमामोदमुदितमधुकरगीते शिष्यविधया कामिनीगानानूच्चारणात्मकाध्ययनरूपतया संभावनात् स्वरूपोत्प्रेक्षा । वृत्त्यनुप्रासेन संसृष्टिः ॥ ९९ ॥

**[1]कान्तामणीनां नवकर्णिकाराश्श्रोतुं गिरश्श्रोत्रसुखायमानाः ।**
**प्रत्यग्रपुष्पस्तबकावनम्राः प्रायेण मौलिं नमयन्ति यस्मिन् ॥ १०० ॥**

कान्तेति—नवाः नूतनाः कर्णिकाराः द्रुमोत्पलाख्यास्तरवः । प्रत्यग्रैः नवीनैः कर्णिकारदोहलीभूतवनितालापसमनन्तरोदितैरिति भावः । पुष्पस्तबकैः कुसुमगुच्छैः अतिबहुलतया स्वाश्रयशाखाभारभूतैरिति भावः । अवनम्रा अवनताः सन्तः । श्रोत्रसुखायमानाः श्रवणानन्दसन्दायिनीः । कान्तामणीनां वरस्त्रीणाम् । गिरः मधुरफणितीः दोहलतया प्रयोजिता इति भावः । श्रोतुं आकर्णयितुम् । प्रायेण प्रायः । मौलिं शिरः शिरस्थानीया उच्चाः शाखा इति भावः । नमयन्ति प्रह्वीकुर्वन्ति । "णम प्रह्वीभावे" इति धातोर्णिजन्तात् कर्तरि लट् । कुसुमभारावनताः कर्णिकारास्तत्कालोदितकामिनीवचश्श्रवणसौकर्याय किमु शिरो नमयन्तीत्यर्थः । अत्र कुसुमभरकृतं शिरस्तयाध्यवसिताग्रशाखानमनं प्रति अफलस्य कामिनीवचश्श्रवणस्य फलत्वं तुमुना प्रतीयत इति फलोत्प्रेक्षा । तदुत्थापितया कार्यकारणयोः पौर्वापर्यव्यत्ययरूपयातिशयोक्त्या उच्चाकृतेर्जनस्याधो निकटगतप्रयोजितवचश्श्रवणे शिरोनमनस्य लोकस्वाभाविकतया स्वभावोक्त्या च सङ्करः ॥ १०० ॥

**उपान्तवल्लीभवनोदरेषु नितान्तनिश्वासजुषो रतान्ते ।**
**सीमन्तिनीर्यत्र हि सिन्दुवारा हसन्ति मूनैरचिरोज्जिहानैः ॥१०१॥**

उपान्तेति—यत्र खलु निष्कुटे सिन्दुवाराः सिन्दुकतरवः कामिनीनिःश्वासपवनदोहलत्वेन प्रसिद्धाः । उपान्ते निजसमीपदेशे विद्यमानानां वल्लीभव-

[1] This verse is missing in A[1].

नानां लतागृहाणां उदरेषु मध्यप्रदेशेषु यावता अन्तरेण सुरतान्तसुखप्रसुप्तवनितानिःश्वासपवनः सिन्दुवारमुपस्पृशेत्तावत्तदन्तरगतलतानिकुञ्जेष्विति भावः। रतान्ते सुरतावसाने नायिकाभिरतिकामनया स्वयमाचरितपुरुषायितसुरतावसाने। अत्र रतान्तावलम्बनं निःश्वासस्य दूरविसारित्वलाभाय, न पुनः सुरतान्तनिःश्वासस्यैव तद्दोहलत्वाभिप्रायेण। नितान्तं अत्यन्तं अतिदीर्घमिति भावः। निःश्वासं रेचकपवनोद्गमं जुषन्ति भजन्तीति तादृशीः, सुरतश्रमेणासकृदुत्कृष्टस्य श्वासपवनस्य तदवसाने स्वच्छन्दविसरणेन निश्वासदैर्घ्यस्यानुभाविकत्वादिति भावः। तादृशीः सीमन्तिनीः कामिनीः। अचिरं अनुपदमेव सुरतावसानसमसमयमेवेति भावः। उज्जिहानैः निर्गत्वरैः। उत्पूर्वाज्जिहीतेरात्मने पदे लटः शानच्। प्रसूनैः कुसुमैः वृन्ताधरविवृतदन्तपङ्क्तिसदृशैरिति भावः। हसन्ति परिहसन्तीवेत्यर्थः। स्वीयां शक्तिमपरिचिन्त्य मोहावेशेन कुतः पुंभावे प्रवर्तितव्यम्, कुतश्चेदृशायासोऽनुभोक्तव्य इत्यसमीक्ष्यकारिणं परिजहसुरिवेति भावः। अत्र दोहलाधीनसिन्दुवारकुसुमोद्गमनक्रियायां सिन्दुवारकर्तृककामिनीचरितपरिहासक्रियास्वरूपोत्प्रेक्षा। अनुप्रासेन संसृष्टिः॥ १०१॥

**आस्वाद्य यस्मिन्नमृतोपमानं मुखासवं मुग्धविलोचनानाम्।**
**वक्त्रेषु तासां वकुला मधूनि भूयः स्वयं पुष्पमुखैर्दिशन्ति॥ १०२॥**

**आस्वाद्येति**—यस्मिन् निष्कुटे। वकुलाः केसराख्याः पादपाः। मुग्धविलोचनानां चपलनयनानां वनितानाम्। अमृतोपमानं सुधातुल्यम्। मुखासवं मुखान्निस्सृतां सुरां वकुलानां दोहलीभूतमिति भावः। आस्वाद्य पीत्वा। भूयः अनुपदम्। स्वयं स्वात्मना। पुष्पैः कुसुमैरेव मुखैः वदनैः। मधूनि मकरन्दान्येव मधूनि आसवान् दिशन्ति प्रदिशन्ति। यथा हि विटसार्वभौमा वाराङ्गनावदनोत्सृष्टं मधु स्वयं आस्वाद्यानुपदमेव स्वमुखोपगृहीतमासवं तासां मुखेष्वर्पयन्ति, एवं वकुला अपि दोहलदायिनीनां मुखासवमापीयानुपदोद्भूतकुसुमात्मकनिजवदनैरासवात्मकं मधु विसृजन्तीति भावः। अत्र दोहलोद्भूतकुसुमनिस्सृतानां मरन्दानां तद्दर्शनार्थोद्ग्रीविकोक्तानि तद्दोहलदायिनीवदनपतने वकुलकर्तृकदोहलदायिनीप्रदिष्टमुखासवप्रतिप्रदानतादात्म्यसंभावनास्वरूपोत्प्रेक्षा प्रकृतनायिका

वकुळवृत्तान्तेन कामिनीकामुकवृत्तान्तपरिस्फूर्तिरूपसमासोक्तिगर्भा । पदेषु मुखत्वारोपात् वकुळेषु कामुकत्वारोपस्य गम्यमानतया एकदेशविवर्तिरूपकेण मधुपदश्लेषेण चानुविद्धेति सङ्करः । अमृतोपमानमित्युपमया संसृष्टिः ॥ १०२ ॥

**मनस्विनीनां मदरागतैलैश्चमत्कृता चम्पकदीपपङ्क्तिः ।**
**प्रायेण यस्मिन्परितः षडङ्घ्रिपरंपरां सन्तमसं निरुन्धे ॥ १०३ ॥**

**मनस्विनीनामिति**—यस्मिन् निष्कुटे । मनस्विनीनां प्रशस्तमनसां प्रणयपरवशानां कामिनीनामिति भावः । मदरागैः मदातिशयादुद्भूतैः रागैः गीतिस्वरोद्गारैरेव तैलैः तिलोद्भतस्नेहैः । सर्वस्नेहपरिचायकं तैलपदं, तैः चमत्कृता उद्दीपिता, कामिनीगानरूपदोहलसंवर्धितेति भावः । चम्पकानां चम्पककुसुमानाम् । "पुष्पे जातिप्रभृतयः स्वलिङ्गा व्रीहयः फले" इति कोशात् । तेषामेव दीपानां पङ्क्तिः माला । परितः समन्तात् । षडङ्घ्रीणां षट्पदानां परंपरां संहतिमेव । सन्तमसं सर्वव्यापि तिमिरबृन्दं, समन्तात् तमः सन्तमसम् । "अवसमन्धेभ्यस्तमसः" इत्यच्प्रत्ययः । "विष्वक् सन्तमसम्" इत्यमरः । प्रायेण प्रायशः । निरुन्धे निरुणद्धि निवारयतीत्यर्थः । कथमन्यथा गाढान्धकारसदृक्षाः कुसुमान्तरेषु दृष्टचरा इह न संपतेयुरिति भावः । समस्तवस्तुविषयकसावयवरूपकानुप्राणिता गाढतमत्वेन रूपितानां तमसां प्रसरणाभावे चम्पकारोपितदीपपङ्क्तिहेतुकत्वसंभावना हेतूत्प्रेक्षा प्रायेणेत्यनेन प्रतीयते ॥ १०३ ॥

**विना मिलिन्दालिगुणानुषङ्गचमत्क्रियां चम्पकपुष्पबाणैः ।**
**मनोभवो यत्र विचित्रशक्तिर्मनस्विनीमानभिदां तनोति ॥ १०४ ॥**

**विनेति**—यत्र निष्कुटे । विचित्रा अद्भुता अपरिमेयेत्यर्थः, शक्तिः सामर्थ्यविशेषः यस्य तादृशः । अतिबलवदस्त्रजालानजेयानप्यल्पतरसुकुमारकुसुममयैरेव परिमितैः शरैररातीन् जयतीति भावः । मनोभवो मारः । मिलिन्दानां षट्पदानां आलिः पङ्क्तिरेव गुणो मौर्वी तेन अनुषङ्गस्य संसर्गस्य मौर्व्यां शरसन्धानरूपस्येत्यर्थः, चमत्क्रियां चातुर्यम्, धनुर्यन्त्रोत्सर्जनेन वेगाधिक्यसंपादनमिति यावत् । विना अन्तरा तामनादृत्येत्यर्थः । चम्पकमधुकरयोः विरोधेन मौर्वीभूतमधुकरैस्सह बाणीभूतानां चम्पकानां संसर्गस्यासंभावितत्वादिति भावः । चम्पकपुष्पैरेव बाणैः सायकैः । मनस्विनीनां प्रशस्तमनस्कानां स्वीयनायकानां अन्यावलोकनादिकृतमात्मधिक्करणमसहमानानां मानिनीनामित्यर्थः ।

मानस्य अन्यावलोकनादिजनितक्रोधस्य भिदां भेदनम्। तनोति रचयति। "तनु-विस्तारे" इति धातोः कर्तरि लट्। चम्पकमयैः बाणैः मानिनीनां महाभीतिमुद्भाव्य सत्वरं नायकैः सह संघटयतीति भावः। अत्र यद्यपि, "अरविन्दमशोकं च चूतं च नवमल्लिका। नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः॥" इति प्रसिद्ध्या उक्तपुष्पपञ्चकातिरिक्तस्य चम्पकस्य मदनसायकत्वं विरुध्यति, तथापि मदनस्य कुसुमेषुत्वप्रसिद्ध्या सामान्यतः सर्वकुसुमेषु प्राप्तस्य मदनबाणत्वस्य कुसुमविशेषपरतया संकोचे प्रमाणाभावेन सौभाग्यसौकुमार्यसौरभ्यादिना सर्वेन्द्रियाह्लादकानां मदनोद्रेककरत्वाविशेषेण सर्वेषामेव कुसुमानां मदनसायकत्वमवसीयते। अरविन्दादीनां पञ्चानामभिधानं तु सलिलोद्भूतानां दिवाविकासिनामुपलक्षकतया पद्मस्य, तथा रात्रावुदितानां संग्रहायेन्दीवरस्य, फलमन्तरा पुष्पमात्रोत्पादकानां संग्रहायाशोकस्य, फलोपहितानामुपसंग्रहाय सहकारस्य, लतागुल्मादिरूपाणां परिचायकतया नवमल्लिकायाश्च ग्रहणम्। अतो न चम्पकस्यानङ्गशरत्वहानिरिति मन्तव्यम्। अत्र मनस्विनीमानात्मकलक्ष्यभेदनरूपकार्यस्य मौर्व्यां बाणसन्धानरूपसामग्र्यपौष्कल्येऽपि निर्वहणाद्विभावनालङ्कारः। "विभावना विनापि स्यात् कारणं कार्यजन्म चेत्" इति लक्षणात्। तस्य चार्थस्य विचित्रशक्तिरिति पदार्थेन समर्थनात् काव्यलिङ्गं चेत्यनयोः सङ्करः ॥ १०४ ॥

**पाद्यं पुष्परसैस्तवार्जुनकृतप्रीतेस्तनोत्यर्जुनः**
**पुन्नागः पुरुषोत्तमस्य तनुते पुष्पोपहारक्रियाम्।**
**दत्ते मन्मथ एष मन्मथपितुर्दिव्यैः फलैः प्रीणना-**
**मित्याकर्णितदारुकोक्तिरदधादीशः परां निर्वृतिम् ॥ १०५ ॥**

[1] **इति श्रीदन्तिद्योतिदिवाप्रदीपाङ्कसत्यमङ्गलरत्नखेटश्रीनिवासदीक्षिततनयस्य कामाक्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरणसहजतालब्ध-विद्यावैशद्यस्य श्रीराजचूडामणिदीक्षितस्य कृतिषु रुक्मिणी-कल्याणनाम्नि काव्ये प्रथमःसर्गः ॥**

**पाद्यमिति**—ईशः श्रीकृष्णः कर्ता। अर्जुनः इन्द्रद्रुः। "नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः" इत्यमरः। अर्जुने फल्गुने विषये कृता विहिता

[1] This colophon is missingin A. and G.

प्रीतिर्येन तादृशस्य । नव ते । पुष्परसैः मकरन्दैः उदकस्थानीयैरिति भावः । पाद्यं पादोदकं अतिथिप्रथमोपहाररूपमिति भावः । तनोति रचयति । एकशब्दोपात्तत्वनिमित्तेन फल्गुनतयाध्यवसिते स्वस्मिन् हितप्रेम्णे भवनमुपगताय तुभ्यमवश्यार्पणीयं पादोदकं तद्रूपतापन्नैः स्वीयमरन्दैरेव निर्वर्तयतीत्यर्थः । तथा पुन्नागः केसरतरुः पुरुषश्रेष्ठश्च, पुरुषोत्तमस्य परमपुरुषस्य सदृक्षतया स्वसुहृद इति भावः । पुष्पैः कुसुमैः उपहारक्रियां उपायनार्पणव्यापारम् । तनुते रचयति, सुरभिकुसुमसमृद्धेः पथिकश्रमापनेतृत्वस्य प्रसिद्धत्वादिति भावः । तथा एष मन्मथः कपित्थः स एव प्रद्युम्नः मन्मथपितुः इन्दिरायां मदनजनकस्य विष्णोः तदात्मनस्तवेति भावः । रुक्मिण्यां प्रद्युम्नं जनयिष्यत इति वा । दिव्यैः रमणीयैः फलैः प्रीणनां प्रीतिं दत्ते ददाति । एवमेकोद्यानगृहस्थानाममीषां स्वावासाभ्यागतार्हणातौल्येऽपि प्रत्येकमेकैकसम्बन्धान्तरनिमित्तकतया एकैकमेकैक इति प्रेमानुरोधेनाचरन्तीवेति भावः । इति एवंविधतया आकर्णिता श्रुता अनुमोदिता चेत्यर्थः । दारुकस्य दारुकनाम्नः सूतस्य उक्तिश्रमत्कृतभाषणं येन तादृशस्सन् । परां निरतिशयां निर्वृतिं सुखं हृदयानन्दातिशयमित्यर्थः । "निर्वाणं निर्वृतिस्सुखम्" इत्यमरः । अदधात् अधत्त । इत्थं दारुकप्रदर्श्यमानमुद्यानरामणीयकमधिगम्य निरतिशयां निर्वृतिमभ्यगादिति भावः । अत्र स्वभावसमुद्भूतेषु अर्जुनपुन्नागमन्मथतरूणां मधुस्यन्दपुष्पोद्गमफलोद्गमेषु कृष्णागमनसमयसंघट्टनेनाध्यवसितश्लेषमूलाभेदातिशयोक्तिसंपन्नफल्गुनपुरुषर्षभमदनकृतपादोदकपुष्पोपायनफलातिसर्जनं प्रति अर्जुनादिषु प्रीत्याधानादिकृतः सम्बन्धो न हेतुरिति तस्य हेतुत्वमर्जुनकृतप्रीतेरित्यादिविशेषणविन्यासबलात् प्रतीयत इति हेतूत्प्रेक्षा गम्या । अर्जुनकृतप्रीतेरित्यादिविशेषणानामर्जुनादिकृतप्रत्युपकारसमर्थकतया काव्यलिङ्गानुविद्धेति सङ्करः । शार्दूलविक्रीडितं वृत्तम् । "सूर्याश्वैर्मसजास्ततस्सगुरवः शार्दूलविक्रीडितम्" इति लक्षणात् ॥

इति श्रीविश्वामित्रकुलकलशार्णवचन्द्रायमाणबालचन्द्रार्यतनूजेन यज्ञवेदेश्वरेण कृतायां
रुक्मिणीकल्याणव्याख्यायां मौक्तिकमालिकाख्यायां
प्रथमस्सर्गः समाप्तः

---

# द्वितीयस्सर्गः

अथ च यूनोः परस्परालोकनश्रवणस्मरणादिना समुद्भूतस्य श्रृङ्गारस्थायिनो रतिभावस्याङ्कुरितत्वपल्लवितत्वकोरकितत्वकुसुमितत्वादिना क्रमेण रसतापत्तेस्तथाविधं भगवतो रुक्मिणीगोचरं रतिभावं क्रमशः प्रपञ्चयति—

**अथ स्मरोद्दीपनमात्मनिष्कुटं[1] विलोचनासेचनकं विलोकयन् ।**
**अतन्तनीदेष हृदन्तरातिथिं मधुद्विषन् भीममहीशनन्दनाम् ॥ १ ॥**

**अथेति**—अथ दारुकवचनानन्तरम् । एष मधुद्विषन् मधुनाम्नो दानवस्य संहारी हरिः । द्विषोऽमित्र इति "द्विष अप्रीतौ" इति धातोर्लटः शतृप्रत्ययः । जातिवाचकत्वात् सन् देवदत्त इतिवत्साधुत्वम् । अत्र मधुशब्दश्लेषेण वसन्तविद्वेषीति लभ्यते । तेन तात्कालिकी रुक्मिणीविषयिणी विरहावस्था व्यज्यते । विलोचनयोः नयनयोः आसेचनकं अपर्याप्तानन्ददायकम् । "तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्" इत्यमरः । स्मरस्य मदनस्य उद्दीपनं प्रज्वलनं ददाति वितरतीति तादृशं मदनोद्रेककारकमिति यावत् । आत्मनः स्वस्य निष्कुटं गृहोद्यानम् । यद्वा स्मरं मदनं उद्दीपयन्ति श्रृङ्गाररसपरिपोषणेनाभिवर्धयन्तीति स्मरोद्दीपनानि उद्दीपनविभावरूपतया प्रसिद्धानि पल्लवकुसुमपरभृतषट्चरणमरन्दमन्दपवनादिविजृम्भणानि ददातीति तादृशं निष्कुटमित्यर्थः ॥ तदुक्तम्—"विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः । आनीयमानः स्वादुत्वं स्थायीभावो रसः स्मृतः ॥ विभावः कथ्यते तत्र रसोत्पादनकारणम् । आलम्बनोद्दीपनात्मा स द्विधा हृदयंगमः ॥ स्थाय्युदेति यदालम्ब्य तदालम्बनमुच्यते ।

[1] A. स्मरोद्दीपनदाननिष्कुटम् .

आलम्बनगुणश्चैव तच्चेष्टा तदलंकृतिः ॥ तटस्थश्चेति विज्ञेयश्चतुर्थोद्दीपनक्रमः । आलम्बनगुणो रूपयौवनादिरुदाहृतः ॥ तच्चेष्टा यौवनोद्भूतहावभावादिका मताः । नूपुराङ्गदहारादितदलङ्करणं मतम् ॥ मलयानिलचन्द्राद्यास्तटस्थाः परिकीर्तिताः ॥" इति ॥ चन्द्राद्या इत्यनेन पूर्वोदिताः पल्लवादयो गृह्यन्ते । तथाविधं निष्कुटं पश्यन् सन् । भीममहीशस्य भीष्मकनाम्नो महीशस्य राज्ञः नन्दनां रुक्मिणीम् । हृदन्तरस्य हृदयावकाशस्य सदनस्थानीयस्य अतिथिं प्रथमागतपूज्यपुरुषरूपम् । अतन्तनीत् अकरोत्, स्मृतिविषयीचकारेति भावः । अत्र शृङ्गारस्थायिनो रतिभावस्य उत्पादकं रुक्मिणीस्मरणमात्रमुद्दिष्टमिति भावस्याङ्कुरितत्वरूपोत्पत्त्यवस्था व्यज्यते । अत्र रुक्मिण्यामतिथित्वरूपणेन भगवन्मनसः सदनत्वस्य गम्यतया एकदेशविवर्तिरूपकमलङ्कारः । अस्मिन् सर्गे प्रायेण वंशस्थवृत्तम् । "जतौ तु वंशस्थमुदीरितं जरौ" इति लक्षणात् ॥ १ ॥

**वियोगसन्तापभरापनुत्तये विगाह्य शौरेरथ मानसोदरम् ।**
**कृताप्लवायां कृशमध्यमामणावुपर्युपर्युत्कलिका जजृंभिरे ॥ २ ॥**

**वियोगेति**—अथ रुक्मिणीसञ्चिन्तनसमनन्तरम् । कृशमध्यमानां कृशाङ्गीनां मणौ श्रेष्ठायां रुक्मिण्यामित्यर्थः । शौरेः कृष्णस्य । मानसं मन एव मानसाख्यं सरः तस्य उदरं मध्यदेशम् । विगाह्य प्रविश्य । वियोगेन विरहेण कृष्णासमागमरूपेण संजातस्य सन्तापभरस्य तापातिशयस्याल्पशीतोपचाराद्यनपोह्यस्येत्यर्थः । अपनुत्तये व्यपोहनाय निवृत्तये किलेति भावः । कृताप्लवायां विहितगाढमज्जनायां सत्याम् । "समे आप्लाव आप्लवः" इत्यमरः । भगवता कृतं रुक्मिणीविचिन्तनमेव तयैव स्वयमाचरिततापापनोदार्थकगाढावगाहनतयाध्यवसीयते । उपर्युपरि, प्राचुर्ये द्विरुक्तिः । उत्कलिकाः उत्कण्ठा एव ऊर्ध्वोद्गताः कलिकाः कोरकाः जलबिन्दवः । "उत्कण्ठोत्कलिके समे" इत्यमरः । जजृंभिरे उदभवन् किमिति भावः । "जृभी गात्रविनामे" इति धातोरात्मने पदे लिट् । अत्र भगवतः उत्कण्ठायाः श्लेषमूलाभेदातिशयोक्तिलब्धमुद्गतसलिलबिन्दुसन्तानं प्रति भगवत्कृतरुक्मिणीसंस्मरणाध्यवसितं तापोपशमनार्थकं मानसपदश्लेषमूलातिशयोक्तिसंपादितमानससरःप्रवेशपूर्वकरुक्मिणीकृतमाप्लावनमहेतुरेव हेतुतया

संभावितमिति हेतूत्प्रेक्षा व्यञ्जकाभावात् गूढा उक्तातिशयोक्त्युत्थापिता । अथवा "मङ्गलानन्तरारम्भप्रश्नकात्स्न्येष्वथो अथ" इति कोशात् अथशब्दस्य प्रश्नार्थकतया जजृंभिरे किमित्यर्थात् व्यञ्जकसमवधानात् वाच्यैव ॥ २ ॥

**चिराय चिन्तोपधिदूतिकामुखात् समेत्य संकेतगृहं मनो विभोः ।**
**असौ परावेक्षणशङ्कयाबला बहिर्न गन्तुं चकमे बलादपि ॥ ३ ॥**

चिरायेति—असौ पूर्वोदिता । अबला स्वच्छन्दनायकाभिगमनासमर्थेति भावः । चिन्ता भगवत्कृतमनुचिन्तनमिति उपधिः कपटो यस्यास्तादृश्याः दूतिकायाः सञ्चारिकायाः मुखात् द्वारात्, दूतीसंघटनानुरोधादिति भावः । सङ्केतगृहं सङ्केतस्थानभूतं एकान्तप्रदेशरूपमिति भावः । विभोः श्रीकृष्णस्य । मनःचित्तम् । समेत्य प्राप्य । मनसोऽदृश्यतया तदाश्रितस्याप्यदृष्टिगोचरत्वसंभवादिति भावः । चिराय बहोः कालादपि । बलादपि भावान्तरोपमर्देऽपीत्यर्थः । बहिः गन्तुं श्रीकृष्णचित्तादन्यत्रापसर्पितुम् । परावेक्षणशङ्कया अन्यदृष्टिगोचरीभवने त्रासेनेवेत्यर्थः । न चकमे नैच्छत् । "कमु कान्तौ" इति धातोरिच्छार्थादात्मनेपदे लिट् । भगवच्चित्तस्य रुक्मिणीरूपाद्विषयादन्यतःप्रापणेन विरहविनोदनार्थानन्तोदन्तसन्तानेऽपि हरिः सन्ततकान्तासञ्चिन्तनैकदन्तुरितान्तरङ्ग एवाभवदिति भावः । अत्र संयोगवृत्तितयाध्यवसितया विषयवृत्त्या भगवच्चित्तरूपं सङ्केतगृहमभ्यागताया निरन्तरानुवर्तनाध्यवसितं बहिर्गमनाभावं प्रति कविकल्पितायाः परावेक्षणशङ्काया हेतुत्वसंभावना हेतूत्प्रेक्षा व्यञ्जकाभावात् गूढा । सा च भगवन्मनसि सङ्केतसदनत्वारोपेण रुक्मिण्यामभिसारिकात्वारोपस्य गम्यतया एकदेशविवर्तिरूपकानुविद्धा । तच्च रूपकं चिन्तोपधिदूतिकेति कैतवापह्नुत्या, अतीन्द्रियतया सङ्केतार्हत्वरूपाभिप्रायगर्भविशेष्यवाचकमनःपदविन्यासात् परिकराङ्कुरेण, बलादिति बलात्कारे भावान्तरसन्निपाते वा कारणे सत्यपि निर्गमतयाध्यस्तविस्मरणरूपकार्यानुत्पत्त्या विशेषोक्त्या, अबलेति तत्समर्थकपदसन्निवेशात् पदार्थहेतुककाव्यलिङ्गेन चानुविद्धेति संकरः । अत्र च रुक्मिणीविषयकरतिभावस्य भावान्तरातिरस्कृतत्वेनान्यभावस्य स्वात्मभावोपनायकत्वप्रतीत्या चिरादपीत्युक्त्या निरन्तरानुवृत्त्याङ्कुरितस्य रागस्य पल्लवितत्वरूपावस्था कृष्णस्य सन्तत-

रुक्मिणीचिन्तनप्रतिपादनेन तदेकायत्ततताप्रतीत्या विप्रलम्भशृङ्गारसंभावितासु दशावस्थासु मनस्सङ्गो नामावस्थाविशेषो व्यज्यते । तदुक्तम्—“ चक्षुःप्रीतिर्मनस्सङ्गः संकल्पोऽथ प्रजागरः । अरतिः संज्वरः कार्श्यं लज्जात्यागो भ्रमो मृतिः ॥ ” इति । “ मनः सङ्गस्तु मनसस्तदेकायत्तता मता ” इति च ॥ ३ ॥

**घनाघनस्तत्कबरीभरच्छलश्चरीकरोति स्म पदं हृदन्तरे ।**
**विभोर्विचित्रं दृशि बाष्पवृष्टिभिर्विसृत्वरीभिः समभावि सत्वरम् ॥**

**घनाघनेति**—तस्याः रुक्मिण्याः । कबरीभर इति केशपाश इति छलः कपटो यस्य तादृशः । घनाघनः मेघः । विभोः कृष्णस्य । हृदन्तरे हृदयमध्ये । पदं अवस्थानम् । चरीकरोति स्म अकरोत् । करोतेः यङ्लुगन्ताल्लट् । स्मयोगात् भूतार्थता । बाष्पैः नयनसलिलैरेव वृष्टिभिः वर्षबिन्दुभिः कर्त्रीभिः । दृशि नयने, विभोरित्यनुषज्यते । विसृत्वरीभिः प्रसरन्तीभिः । समभावि सम्बभूव । संपूर्वाद्भवतेर्लुङ् । रुक्मिणीकचभारस्मृतिमात्रेण भगवतो बाष्पवृष्टयः समभूवन्निति भावः । विचित्रं आश्चर्यम् । एकत्र मेघावस्थाने ततोऽन्यत्र वर्षोत्पत्तिरिति चित्रम् । तत्राप्यधोभागे मेघावस्थितिस्तदुपरिभागे वर्षोद्गतिरिति महदद्भुतमिति भावः । अवृष्टिरूपकार्यस्य तत्कारणघनावस्थानस्य च भिन्नदेशावस्थित्या असङ्गत्यलङ्कारः । “ विरुद्धभिन्नदेशत्वं कार्यहेत्वोरसंगतिः ” इति लक्षणात् । स च कबरीभरच्छलः इति कैतवापह्नुत्यनुप्राणित इति संकरः ॥

नन्वत्र विरोधालंकार एव स्यादिति चेत् , सत्यम् । असंगतेः विरोधात् , विविक्तविषयत्वाभावेन विरोधस्य समानाधिकरणस्थले जातेः जात्यादिभिरित्यादेः विविक्तविषयतया, ‘ सावकाशनिरवकाशयोः निरवकाशं बलीयः ’ इति न्यायेन निरवकाशाया असङ्गतेरेवात्रालंकारत्वमित्यलं विस्तरेण ॥ ४ ॥

**वियोगघर्मांशुविवर्धितोष्मणो महाभृतस्तस्य मनस्तटे भ्रमन् ।**
**विदर्भजाकैशिकविभ्रमाम्बुदो व्यजृम्भयद्बाष्पभरं नु[1] निर्भरम् ॥५॥**

**वियोगेति**—विदर्भजायाः रुक्मिण्याः कैशिकः केशसमूहः । “ तद्वृन्दे कैशिकं कैश्यम् ” इत्यमरः । तदिति विभ्रमो भ्रान्तिः अपदेशो वा यस्य तादृशः

[1] A. तु.

अम्बुदः वारिदः। वियोगो विरह एव घर्मांशुः सूर्यस्तेन विवर्धितः समुत्पादितः ऊष्मा तापो यस्य तादृशस्य। तस्य महीभृतः राज्ञः कृष्णस्येत्यर्थः। पर्वतस्य च मनस्तटः चित्तदेश एव मनस्तटः मनश्शिलायुक्तस्तटः सानुः तस्मिन्। भ्रमन् सतत-परिवर्तमानस्सन्। बाष्पभरं नयनसलिलसन्तानमेव बाष्पभरं जलधूमसंहतिम्। "बाष्पोऽश्रूण्यम्बुधूमे च" इति वैजयन्ती। निर्भरं अतिमात्रम्। "अतिमात्रोद्गाढ-निर्भरम्" इत्यमरः। व्यजृम्भयन्नु उदपादयत् किमु। रुक्मिणीकेशपाशसञ्चिन्तन-समयसमनन्तरमेव कृष्णस्य बाष्पधारोद्गमेन केशपक्षे घनतुल्यतया केशरूपो घनः एव नयनसलिलाध्यवसितं बाष्पाख्यं जलधूममुदपादयत् किमिति संभाव्यत इति भावः। अत्र विरहजनितबाष्पोद्गमे वियोगरूपसूर्याभितप्तकृष्णमनःप्रदेशरूप-पर्वतसानुसञ्चारिरुक्मिणीकेशपाशरूपवारिदकृतजलधूमोत्सर्जनक्रियातादात्म्यसं - भावना स्वरूपोत्प्रेक्षा। सा च महीभृत इति मनस्तट इति बाष्पभरमिति च श्लेषमूलाभेदातिशयोक्त्या लब्धात्मा समस्तवस्तुविषयसावयवरूपकोत्थापितेति संकरः॥ ९॥

**विवेकराकाविधुमाशयागते वधूमणीवेणिमुधाविधुन्तुदे।**
**ग्रसत्यसौ सत्यममज्जदञ्जसा [1]विभुर्मुहुर्मोहमहार्णवाम्भसि॥ ६॥**

**विवेकेति**—आशयं हृदयं आगते प्राप्ते मनसा परिचिन्तित इत्यर्थः। अन्यत्र. आशया अमृतमयस्य चन्द्रस्य ग्रसनेच्छया। यद्वा आशया दिशा आगते गगनमार्गेणाभिमुखापतित इति भावः। वधूमण्याः रुक्मिण्याः वेणिमुधाविधुन्तुदे वेणिकाकपटराहौ। विवेकं तत्तद्वस्तुस्वरूपपरिज्ञानमेव राकाविधुं पूर्णचन्द्रम्। ग्रसति कबलयति सति, चन्द्रग्रहणाख्यपुण्यकाले घटिते सतीत्यर्थः। असौ विभुः एषः कृष्णः। स्वयं विधिचोदितं कर्म निर्माय परानप्येवमनुष्ठापयितुं मानुषवेषानुगुण-मनुतिष्ठन्निति भावः। अञ्जसा झटिति अनुपदमेवेत्यर्थः। मोहः मूर्छनं सन्निकृष्टवस्तुपरिज्ञानाभाव एव महार्णवः दुस्तारः सागरः तस्यांभसि सलिले। मुहुः प्रतिपदं असकृदित्यर्थः। अमज्जत् मज्जति स्म। सत्यं ध्रुवम्। भगवतो मोहसागरप्रतिपदमज्जनं विवेकचन्द्रमसो वेणीविधुन्तुदग्रसनात्मकसोमोपराग-

[1] G. मुहुर्विभुर्मोह-

पुण्यकालप्रयुक्तं किमिति भावः। हरिः लोकोत्तररुक्मिणीवेणीसंस्मरणसंप्रवृद्ध-विरहसन्तापात् प्रतिक्षणं मूर्छामगच्छदिति भूतार्थः। अत्र महार्णवत्वेन रूपिते मोहे भगवतः प्रतिपदसंलग्नाध्यवसितमसकृन्मज्जनं प्रति रुक्मिणीवेण्यपह्नुत-विधुन्तुदकर्तृकविवेकरूपचन्द्रस्यानुन्मेषाध्यवसितं ग्रसनं सोमोपरागविधया हेतु-त्वेन संभावितमिति हेतूत्प्रेक्षा। सा च रूपकानुप्राणिता, सा चातिशयोक्त्य-पह्नुतिभ्यामिति संकरः॥ ६॥

**तदा हृदाकाशपथावतारिणा तदीयवेणीतमसा तिरोहिते।**
**विवेकशीतत्विषि किं विभोस्तमो विमोहसन्तानमयं व्यजृम्भत॥७॥**

**तदेति**— विभोः कृष्णस्य। विवेकशीतत्विषि विवेकचन्द्रमसि। हृत् हृदयमेव आकाशपथः गगनमार्गस्तेन अवतारिणा आपतता मनसा परिचिन्तितेनेत्यर्थः। तदीयवेणीतमसा रुक्मिणीवेणीरूपराहुणा। "तमस्तु राहुः" इत्यमरः। तिरोहिते पिहिते ग्रस्ते सतीत्यर्थः। विभोरित्यनुषज्यते। विभोः कृष्णस्य। विमोहसन्तान-मयं मूर्छानुवृत्तिरूपम्। तमः अन्धकारं, विषयप्रतिरोधरूपधर्मसाम्यादिति भावः। व्यजृम्भत किं व्यवर्धत किमु। जृम्भतेः कर्तर्यात्मनेपदे लङ्। कथमन्यथा नित्य-निरतिशयसत्यज्ञानप्रत्यस्तभक्तजनतमस्तोमस्यापि भगवतो मोहसन्तमसोन्मेष इति भावः। अत्र मोहसन्तानारोपितान्धकारविजृम्भणं प्रति वेण्यारोपितराहुकृतविवेक-चन्द्रग्रसनमहेतुरेव हेतुतया संभावितमिति हेतूत्प्रेक्षा। सा च हृदाकाशेत्यादि समस्तवस्तुविषयकसावयवरूपकोत्थापितेति संकरः॥ ७॥

**यदा तदक्षिभ्रुवमिन्दिराधिभूर्निनाय [1]चित्ताध्वनितान्तपान्थताम्।**
**स चक्षुषाध्यक्षयति स्म तत्क्षणे स्मरस्य जैत्रं सशरं शरासनम्॥८॥**

**यदेति**— इन्दिराधिभूः लक्ष्मीपतिः कृष्णः। "अधिभूर्नायको नेता" इत्यमरः। यदा यस्मिन् समये। तस्या रुक्मिण्याः अक्षिणी च भ्रुवौ च अक्षिभ्रुवम्। प्राण्यङ्गत्वादेकवद्भावः। नयनयुगं भ्रूयुगलं चेत्यर्थः। चित्ताध्वनि चेतःपथे नितान्तं अत्यन्तं पान्थतां पथिकत्वम्। निनाय प्रापयामास, चिरमन्वचिन्तय-

[1] G. चिन्ता-

दित्यर्थः। तत्क्षणे तदनुचिन्तनसमयमेव। सः कृष्णः। सशरं बाणसहितम्। जैत्रं त्रिलोकविजयक्षमम्। स्मरस्य मदनस्य। शरासनं धनुः कर्म। चक्षुषा नयनेन। अध्यक्षयति स्म प्रत्यक्षीचकार। रुक्मिणीनयनयोः भ्रुवोश्च मदनशरशरासनाभिन्नतया तदक्षिभ्रुवस्मृतिमात्रेण स्मरणमात्रसन्निधानकारिमहापुरुषवत् मदनशरशरासनसाक्षात्कारो बभूवेत्यर्थः। अक्षिभ्रुवचिन्तनेनात्यन्तविरहव्यधाकुलितोऽभवदिति भावः। रूपकालङ्कारः। नन्वत्र 'मुखं चन्द्रः' इत्यादाविवारोपस्य शाब्दत्वाभावात् कथं रूपकत्वमिति वाच्यम्। आरोपस्य शाब्दत्वाभावेऽपि अर्थादभेदप्रतीतावपि रूपकस्य सर्वालङ्कारिकाभ्युपगतत्वात्। चित्ताध्वनितान्तपान्थतामिति तु परंपरितं, अध्वत्वपथिकत्वरूपणयोरन्योन्यसापेक्षत्वात्। न च विशिष्टरूपके विशेषणरूपकापेक्षास्तीति वाच्यम्, रूपकस्य सादृश्यमूलकत्वनियमस्य न परंपरिते रूपके विवक्षेत्यस्यैव भेदकत्वात्॥ ८॥

**अमुष्य पद्मं किल नाभिजातमित्युपेक्ष्य तद्भीमसुतादृगुत्पलम्।**
**स्मरोऽभिजातं स्मृतमायुधं व्यधाद्विना न मुख्यं करणं महज्जयः॥९॥**

अमुष्येति—स्मरो मदनः, कृष्णपराजयानुगुणायुधान्वेषपर इति भावः। अमुष्य कृष्णस्य पद्मनाभस्वरूपस्येति भावः। पद्मं नाभिकमलम्। नाभिजातं नाभीप्रदेशसमुद्भूतं, अत एव अभिजातं कुलीनं न भवतीति दुष्कुलीनत्वं लभ्यते। इति किल एवं मत्वेव। तत् नाभिकमलम्। उपेक्ष्य अवधीर्य, कृष्णविजयोपयोगितयानङ्गीकृत्येत्यर्थः। कमलत्वेन स्वशरत्वेऽप्यकुलीनतया शत्रुविजयक्षमं न स्यादिति तदुदस्येति भावः। अभितः समन्तात् जातं प्रवृद्धं प्रसृतमित्यर्थः, अतिविशालमिति भावः। तेन महाकुलोद्भूतमिति च लभ्यते। तथा स्मृतं चिन्तितं, प्रकरणात् कृष्णेनेति ? [मदनेनेति] लभ्यते। तेन तत्कालोपस्थितत्वं तदङ्गीकरणनिमित्तं व्यज्यते। अत एव स्मृतिविहितमिति च लभ्यते। भीमसुताया रुक्मिण्याः दृक् नयनमेव उत्पलं इन्दीवरं कर्म। आयुधं सायकम्। व्यधात् अकरोत्। रुक्मिणीनयनस्य इन्दीवररूपतया तदीयसायकत्वेन अभिजातत्वेन स्मृतिसंमतत्वेन च शत्रुविजयपर्याप्तं तदेवायुधीकृत्य कृष्णं जिगायेति भावः। रुक्मिणीनयनसञ्चिन्तनेनात्यन्तविरहव्यथितो हरिरभवदिति भावः॥

ननु महाकुलोद्भूतत्वमायुधस्य शत्रुविजये न नियामकं प्रत्युत कुलोद्भूतस्य कारुण्याश्रयतया हिंसापेतत्वं पुनः प्रकृतविरुद्धमित्यतः कारणान्तरेण समर्थयति । मुख्यं मुखे वदने भवं मुख्यं प्रधानं च, प्रतिपक्षपक्षविक्षेपविचक्षणमिति भावः । करणं चाक्षुषप्रमाकरणं साधकतमं च । विना अन्तरा तदपहायेत्यर्थः । महतां महाबलानां जयः पराजयः । न नहीत्यर्थः । मुख्यसाधनाभावे तत्साध्यकार्यमपि न सिध्येदेवेति भावः । नयनेन्दीवरस्य मुखोद्भूतत्वेन श्लेषेण प्रधानरूपत्वेन तदङ्गीकारो नाभिकमलस्यातथात्वेन तत्परित्यागश्च युज्यत एवेति भावः । अत्र मदनकृते रुक्मिणीनयनोत्पलकृष्णनाभिकमलयोः ग्रहणाग्रहणे प्रति श्लेषमूलयोः कुलीनत्वाकुलीनत्वयोः हेतुत्वसंभावनया हेतूत्प्रेक्षे श्लेषानुप्राणिते, मदनकृतस्य रुक्मिणीनयनोत्पलायुधीकरणेन कृष्णपराजयरूपविशेषस्य 'विना न मुख्यम्' इत्यादि सामान्येन वैयधिकरण्येन समर्थनादर्थान्तरन्यासश्च ॥ ९ ॥

**मनोऽभिधानो मधुविद्विषो झषो विलासहासामृतवीचिषु भ्रमन् ।**
**विदग्धलीलातिलकस्य नासिकाविभूषणं हा बडिशं व्यगाहत ॥**

**मन इति**—मनश्चित्तमित्यभिधानं नाम यस्य तादृशो झषः । विदग्धा चतुरा लीला शृङ्गारचेष्टा यासां तादृशीनां विलासिनीनां तिलकस्य ललामभूतायाः रुक्मिण्याः । विलासाश्च हासाश्च त एवामृतवीचयः सुधोर्मयः तासु । भ्रमन् सञ्चरन् सन्, तत्तल्लावण्यातिशयमसकृदनुभवन्नित्यर्थः । नासिकाविभूषणं तीक्ष्णाग्रकुञ्चिकाकारनासाभरणरूपम् । बडिशं मत्स्यवेधनानुकूलदीर्घदण्डनिबद्धं शल्यविशेषम् । "बडिशं मत्स्यवेधनम्" इत्यमरः । व्यगाहत अवाप । बडिशकीलितस्ततोऽन्यत्र गन्तुमसमर्थस्तत्रैव चिरमवातिष्ठतेति भावः । विपूर्वात् गाहतेः कर्तर्यात्मने पदे लङ् । हा कष्टं, बडिशाग्रनिखातामिषजिघत्सया समापतितस्य मीनस्य बडिशकीलनमिव सुखातिशयलिप्सोः श्रीकृष्णमनसः नासाभूषणचिन्तनात् बलवती व्यथाऽभवदिति महत्कष्टमिति भावः । अत्र मनःप्रभृतीनां झषत्वादिरूपणात्सावयवरूपकम् ; तच्च मनोऽभिधान इत्युक्त्या मन इत्यभिधानमात्रं, न पुनर्मन एव । किं तर्हि झष इति निषेधपर्यवसायिना[न्या] अभिधानशब्दलब्धापह्नुतिगर्भेति संकरः ॥

**तदुक्तिनिःश्वासविलोचनाननस्मृतिक्षणेषु क्रमशस्तमाक्षिपन् ।**
**पिको मरुन्मारशरो निशाकरो विरोधिचिन्तां विषहेत को नु वा ॥**

**तदिति**—तस्याः रुक्मिण्याः उक्तिश्च निःश्वासश्च विलोचनं च आननं च तेषां वचनश्वासलोचनमुखानां स्मृतिक्षणेषु सञ्चिन्तनसमयेषु। बहुवचनात् यदा यदा स्मरणं तदा तदेति नियतत्वं प्रतीयते । तेन च वक्ष्यमाणविरोधिचिन्तनकृत-व्यथनरूपार्थस्य व्याप्तिविशिष्टतया दुरपह्नवत्वं व्यज्यते । पिकः कोकिलः उक्तिप्रतिद्वन्द्वीति भावः । मरुत् मलयानिलः निःश्वासप्रतिभट इति भावः । मारशरः मदनसायकः विलोचनप्रतिपक्ष इति भावः । निशाकरः चन्द्रः मुखपरिपन्थीति भावः । इमे इति शेषः । क्रमशः यथाक्रमं, उक्तिस्मरणसमये पिकः निश्वासस्मृतौ मरुदिति उत्पलाख्यक्रमेणेत्यर्थः । तं कृष्णम् । आक्षिपन् अधून्वन् अपीडयन्निति भावः । अमुमर्थं सामान्येन समर्थयति । को नु वा विरोधिनः द्विषतः चिन्तां स्मरणं तदीयगुणानुमोदनमिति भावः । विषहेत मर्षयेत् । न कोऽपि सहेतेत्यर्थः । विपूर्वात् सहतेरात्मनेपदे लिङ् । उक्त्यादिविचिन्तनावसरेषु पिकादिभिरुद्दीपितेन विरहज्वरेण नितान्तपीडितो हरिरासीदिति भावः । अत्र पिकादिकृतकृष्णव्यथनं प्रति कृष्णकृतं स्वस्वशात्रवगुणानुमोदनमहेतुरेव हेतुतयोपन्यस्तमिति हेतूत्प्रेक्षा व्यञ्जकाभावात् गूढा ; सा च सामान्येन विशेषसमर्थनरूपार्थान्तरन्यासाङ्गमिति तेन, यथासंख्येन च संसृष्टिः ॥ ११ ॥

**तदाशयो लोलदृशस्ततोऽधरप्रवालशय्यापरिवृत्तिमादधत्[1] ।**
**यथेष्टमाश्लिष्य च हारयष्टिकामसोढगाढं स्मरतापगाढताम् ॥ १२ ॥**

**तदाशयेति**—तस्य कृष्णस्य आशयः चित्तं, पुल्लिङ्गात् पुमानिति व्यज्यते। लोलदृशः चञ्चलाक्ष्या रुक्मिण्या इत्यर्थः । अधरे दन्तच्छदे एव प्रवालशय्यायां पल्लवतल्पे परिवृत्तिं पार्श्वविनिमयं परिलुठनमिति यावत् । आदधत् कुर्वन् सन्, अधरमभिध्यायन्निति भावः । ततः अनन्तरम् । प्रवालशय्यापरिलुठनेन सन्तापानप-गमादिति भावः । हारयष्टिकां मुक्तास्रजं, अर्थात् रुक्मिणीकर्णा[कण्ठा]वसि[स]क्त-मिति भावः । स्त्रीलिङ्गात् स्त्रियमित्यपि व्यज्यते । यथेष्टं यावदिच्छम् । गाढं दृढं

[1] G. परिवृद्धिमादधत्.

यथातथा। यावता सन्तापापगमस्तावदिति भावः। आश्लिष्य परिष्वज्य, चिरं विचिन्त्येति भावः। स्मरतापस्य मदनज्वरस्य गाढतां तीव्रत्वम्। असोढ सेहे। मदनज्वरस्य रुक्मिणीप्राप्तिमन्तरा दुर्निवारत्वेऽपि तदीयाधरास्वादगाढालिङ्गनादिरूपसंकल्पसमागमेन किंचित् सह्यसन्तापोऽभूदिति भावः। अत्र चेतश्चिन्तनाध्यवसितप्रवालशय्यापरिवृत्तिगाढालिङ्गनादिवृत्तान्तेनाप्रकृतकामुकवृत्तान्तप्रतीत्या समासोक्तिः। व्याधिरूपभावस्य उपशमनात् भावशान्तिरपीति केचित् ॥ १२ ॥

**निरन्तरध्याननितम्बिनीमणीमनोज्ञहारावलि मानसं विभोः।**
**अवाप मुक्तामयतामथ क्षणाद्दधार तादृक्तरलात्मतामपि ॥ १३ ॥**

**निरन्तरेति**—विभोः कृष्णस्य। मानसं मनः। निरन्तरं अविच्छिन्नं यथातथा ध्याता अनुचिन्तिता नितम्बिनीमण्याः रुक्मिण्याः मनोज्ञा मञ्जुला हारावलिः मौक्तिकमाला येन तादृशं सत्। अथ अनन्तरम्। मुक्तः परित्यक्तः आमयः विरहार्तिर्येन तादृशं तस्य भावस्तत्ता तां नीरोगतामित्यर्थः। अवाप अभजत्। "आप्लृ व्याप्तौ" इति धातोर्लिट्। क्षणात् व्याधिव्यपगमोत्तरक्षण एवेत्यर्थः। तादृक् अनिर्वचनीयां तरलात्मतां चञ्चलस्वरूपतामपि। दधार अबिभ्रत्। संकल्पसमालिङ्गनसमुत्पन्नसुखं क्षणमात्रं अनुभूयानुपदमेव पुनस्तल्लोलुपोऽभूदित्यर्थः। संकल्पसमागमसुखेन प्रथमं व्याधिरूपसञ्चारीभावोपमर्दने समनन्तरमेव चपलताख्यं संचारीभावान्तरमुदभवदिति भावशान्तिरिति भावः। अन्यत्र मुक्तामयतां मौक्तिकविकाररूपतामवाप क्षणाच्च तादृशीं अनिर्वचनीयां तरलात्मतां हारमध्यमणिस्वरूपतां "तरलो हारमध्यगः" इत्यमरः। निर्दोषमहार्घनायकमणिरूपतामिति भावः। दधार प्रापेत्यर्थः। निरन्तरभ्रमरध्यानप्रभावात् कीटस्य भ्रमरभावापत्तिवत् भगवन्मनोऽपि रुक्मिणीमुक्ताहारध्यानप्रभावात् मौक्तिकस्वरूपतां तन्मध्यगुम्भितरत्नस्यापि हारान्तःपातितया तद्रूपताया अप्यावश्यकतया हारमध्यमणिरूपतां च प्रापेति भावः[1]। अत्र हरिमनःकर्तृकस्य मुक्तामयत्वतरलात्मत्वप्राप्तिरूपस्यार्थस्य निरन्तरध्याननितम्बिनीत्यादिपदार्थेन समर्थनात् काव्यलिङ्गमलङ्कारः, न चाशङ्क्यं परिकरः इति, तस्य व्यङ्ग्यार्थसापेक्षतया प्रकृते व्यङ्ग्यानपेक्षणात् ॥ १३ ॥

[1] The original has in addition [केचित्तु रुक्मिणीस्मृतिरूपसञ्चारीभावेनैव व्याध्युपमर्दः ततश्च फलतोदयः इत्याहुः। तदुक्तम् "व्याधिश्शरीरसन्तापो विरहादि समुद्भवः" इति; "भावप्रकाशनपरा चेष्टा चपलतोच्यते" इति च ॥] within brackets.

[1]तदग्रहारैकतलं तलोदरीमणेस्समाक्रामदुरोजमण्डलम् ।
करग्रहं कर्तुमियेष तन्मनो [2]व्यवस्थितिः कामवशंवदेषु का ॥ १४ ॥

तदिति—तस्य कृष्णस्य मनश्चित्तं कर्तृ । तस्याः रुक्मिण्याः अग्रहारस्य हारश्रेष्ठस्य "पराध्र्याग्रप्राग्रसरः" इत्यमरः । एकतलं मुख्यस्थानभूतं वक्ष इत्यर्थः । पक्षे अग्रहारस्य ग्रामस्य ब्राह्मणगृहवाटिकाया इति भावः । एकतलं एकदेशम् । समाक्रामत् व्याप्नोति स्म । समाङ्पूर्वात् "क्रमु पादविक्षेपे" इति धातोर्लङ् । अचिन्तयदिति भावः । पक्षे स्ववशीचकारेति भावः । ततः तलोदरीणां शातोदरीणां मणेः श्रेष्ठायाः रुक्मिण्याः । उरोजमण्डलं स्तनमण्डलम् । पक्षे उरोजाख्यं राष्ट्रमित्यर्थः । "मण्डलं चक्रवालकम्" इत्यमरः । समाक्रामदित्यनुषज्यते । ततश्च कराभ्यां ग्रहं संग्रहणं मर्दनमिति यावत् । अर्थात् स्तनमण्डलस्येति लभ्यते । रुक्मिण्या एव पाणिग्रहणमिति च लभ्यते । पक्षे करस्य राजदेयबलिरूपधनस्य ग्रहं परिग्रहम् । कर्तुं रचयितुम् । स्वसमाक्रान्ताद्राज्यात् बलिमुखेन वित्तमपहर्तुमिति भावः । इयेष ऐच्छत् । रुक्मिणीपाणिग्रहणतत्संभोगादिगोचरो मनोरथोऽभवदिति भावः । तदुक्तम्—"अन्नं वासो वसु महीत्युत्तरोत्तरकाङ्क्षिणः । अशावशात् प्रवर्तन्ते लोभो लोभस्य कारणम् ॥ अदर्शने दर्शनेच्छा दृष्टे संभाषणे मतिः । भाषिते भोगबुद्धिः स्यात् तन्नैरन्तर्यधीस्ततः ॥" इति ॥ अमुमर्थं सामान्येन समर्थयति—कामवशंवदेषु कामपरतन्त्रेषु कामिनीकामुकेष्विति भावः । पक्षे लोभाविष्टे व्यवस्थितिः व्यवस्था, इदमाशंसनीयमितोऽधिकं नापेक्ष्यमिति निर्णयः । पक्षे लब्धमात्रेण परितुष्टिः अर्थलाभेष्वलंबुद्धिश्च । का कीदृशी, न कापि भवेदित्यर्थः । कामुकस्य मनोरथो लुब्धस्य राज्ञो देशाक्रमणकरग्रहणादिकं च युज्यत एवेति भावः । श्लेषरूपकाभ्यां उत्थापितसमासोक्तिगर्भोऽर्थान्तरन्यासालङ्कारः ॥ १४ ॥

धराधरं यः स्वकरोदरे पुरा दधार सोऽयं दनुजान्तकस्तदा ।
पयोधरं पद्मदृशः [3]स्मरन्नपि श्रमोत्तरङ्गश्वसितानिलोऽभवत् ॥ १५ ॥

धराधरमिति—यः दनुजान्तकः शकटाद्यसुरसंहारी कृष्णः । पुरा बाल-भाव एव, निजपूजोल्लङ्घनकुपितपुरुहूतसमादिष्टवलाहकाभिवृष्टिव्यथितगोकुलगोप-

[1] G. तदग्रहारैकततम्. [2] G. व्यवस्थितम्. [3] G. स्तरन्नपि.

जनगोपनावसर इति भावः। धराधरं गोवर्धनाख्यं शैलम्। स्वकरोदरे निजपाणितले। दधार बभार। उदर इत्युक्त्या एकस्य करस्य सर्वांशव्यापनानपेक्षा, ततश्च भगवतः पर्वतस्य सप्ताष्टदिवसनिरन्तरवहनेऽपि भगवच्छ्रमलेशाभावः, तेन च महासत्त्ववत्त्वं च व्यज्यते। सोऽयं तथादृष्टशक्तिरपि हरिः। तदा रुक्मिणीविरहावस्थायाम्। पद्मदृशः रुक्मिण्याः। पयोधरं स्तनम्। स्मरन्नपि संचिन्तयन् सन्नेवेत्यर्थः। श्रमेण आयासेन उत्तरङ्गः अभिवृद्धः अतिदीर्घीभूत इति भावः। श्वसितानिलः निःश्वासमारुतः यस्य तादृशः अभवत् आसीत्। दुस्सहविरहव्यथाकृतदीर्घनिःश्वासग्लपितोऽभूदित्यर्थः। करतलैकदेशमात्रेण गुरुतरगिरिवरचिरधारणेऽप्यसंभावितश्रमलेशस्यापि भगवतो रुक्मिणीस्तनभारचिन्तनमात्रादेव महानायास इति महदिदमाश्चर्यमिति भावः। तेन बलापचयरूपा ग्लानिर्नाम सञ्चारीभावो व्यज्यते। तदुक्तम्—"ग्लानिर्बलस्यापचयो वैवर्ण्यरतिकारणम्" ॥ इति ॥

यद्वा पूर्वधृतगोवर्धनाचलस्य सुखसन्धार्यत्वेऽपि ततोऽप्यत्यन्तगुरुतया चिन्तनमात्रादेव यदायासजनकं स्तनमिति गोवर्धनात् रुक्मिणीस्तनयुगे विशेषप्रतीत्या व्यतिरेको व्यज्यते। विरहातिशयसमर्थितस्य पर्वतवहनेऽप्यश्रमः स्तनस्मरणेऽप्यतिश्रम इति विरोधाभासः। उक्तव्यतिरेकविरोधयोः कस्मिन् कविसंरम्भ इति सन्देहात्स व्यतिरेकपक्षे स्तनरूपगुरुतरवहनं विनैव तत्स्मृतिमात्रेण श्रमवर्णनाच्चपलातिशयोक्तिः। विरोधे तु विरहातिशयप्रतीतिरेवेति मन्तव्यम् ॥ १९ ॥

**विदर्भपाठीनविलोचनामणेः पयोधरेऽथ स्मृतिपद्धतिस्पृशि।**
**स राजहंसस्सहसैव मानसे समेधितौत्सुक्यभरोऽभवत्तराम् ॥ १६ ॥**

**विदर्भेति**—विदर्भस्य विदर्भदेशाधीशस्य भीष्मनाम्नो राज्ञ इत्यर्थः। पाठीनौ मत्स्यविशेषाविव विलोचने नयने यासां तादृशीनां मणेः स्त्रीरत्नभूतायाः रुक्मिण्याः। पयोधरे स्तने पयोधरे जलधरे च। स्मृतिपद्धतिं स्मरणगोचरीभावं स्पृशति श्रयतीति तादृशि सति स्मर्यमाणे सतीत्यर्थः। कृष्णस्य रुक्मिणीस्तनचिन्तायां हंसस्य घनचिन्तायां च सत्यामिति भावः[1]। सः राजहंसः

[1] The original has the following in addition within brackets: [विस्मृतार्थस्मारकचिन्तावसरे सर्वत्र मुखोन्नमनस्यैव भूयो दृष्टचरत्वेन स्मृतेरूर्ध्वदेशादापतनाध्यासात् स्मृतिपद्धतिं स्मरणापातमार्गं गगनान्तरालं स्पृशति आक्रामति सति]

राजश्रेष्ठः कृष्णः, अन्यत्र राजहंसः लोहितनयनवदनहंसविशेषः, "राजहंसास्तु ते चञ्चुचरणैर्लोहितैस्सिताः" इत्यमरः । "हंसास्तु श्वेतच्छदोत्तमाः" इति वैजयन्ती । सहसैव अविलम्बितमेव स्तनपरिचिन्तनमेघाक्रमणसमनन्तरमेवेत्यर्थः । मानसे चेतसि । समेधितः संवृद्धः औत्सुक्यभरः उत्कण्ठातिशयो यस्य तादृशः, अन्यत्र मानसे मानसाख्ये सरसि गन्तव्यदेशे विषये समेधितौत्सुक्यभरः अभिवृद्धोत्कण्ठाभरः । अभवत्तरां समभवत् । भवतेः कर्तरि लङि अतिशयार्थतरप्प्रत्यये "किमेत्तिङव्यय" इति तरबन्तादांप्रत्यये अभवत्तरां मानसपदस्य चेतःपरत्वे मानसपदोत्तरसप्तम्या अधिकरणत्वार्थकत्वं सरःपरत्वे गम्यतया विषयत्वार्थकमिति भेदोऽवगन्तव्यः । अत्र भगवद्वृत्तान्ते वर्ण्यमाने श्लेषमहिम्ना अप्रकृतहंसवृत्तान्तप्रतीत्या प्रकृताप्रकृतोभयश्लेषः ध्वनिरित्यप्याहुः॥१६॥

**नतभ्रुवोऽस्या [1]नवरोमराजिकां नयत्यमुष्मिन्नलिनेक्षणे मनः ।**
**कृपामपास्याशु कृपाणवल्लरीं रयेण पाणौ रतिजानिरादधे ॥ १७ ॥**

**नतेति**—अमुष्मिन्नलिनेक्षणे अस्मिन् कमलाक्षे कृष्णे । अस्या नतभ्रुवः अमुष्या रुक्मिण्याः । नवरोमराजिकां नवोद्गतां रोमावलिं प्रधानकर्म । मनः चित्तं स्वकीयं हृदयं अप्रधानकर्म । नयति प्रापयति सति । "णीञ् प्रापणे" इति द्विकर्मकाद्धातोर्लटः शतृप्रत्ययः । रोमावलीमनुचिन्तितवतीत्यर्थः । रोमराजिरूपमाशंसनीयं वस्तु स्वयमपहृत्यानन्यवेद्ये मनसि निवेशितवति सतीति व्यज्यते । रतिजानिः मदनः, मनस्येव नित्यनिवासशील इति भावः । कृपां दयाम् । अपास्य परित्यज्य । पिता पुत्रत्वकृतमनुबन्धमप्यविचिन्त्येति भावः । कृपाणवल्लरीं खड्गलताम् । पाणौ करे । रयेण तरसा । आदधे बभार । खड्गेनासकृत् प्रजहारेत्यर्थः । रोमावलीसंस्मरणक्षण एव निरतिशयमदनव्यथाकुलितो हरिरभवदिति परमार्थः । मदनस्य सकलजगन्नियन्तृतया कस्यचिद्वित्ते केनचिदपहृत्य गोपितेऽपि तदपहर्तृशिक्षणस्यावश्यकतया अपहृतद्रव्यस्य रोमराजिरूपस्य स्वावासे मनस्येवावस्थापनेन तद्विषये साक्षाद्दृष्टृपुरुषान्तरगवेषणप्रयासं विनैव स्वयमेव परिज्ञाय तदनुगुणं खड्गच्छेदनरूपदण्डमनुपदमधात् किमिति भावः । यद्वा मुषितद्रव्यस्य

[1] G. नवरोमराजिकं.

यत्रोपलब्धिस्तस्यापि दण्डापातभिया स्वसदनानयनेन स्वापराधभिया चोरमशिक्षयदित्यर्थः । अत्र मनो नयति सतीति सतिसप्तम्या मदनकृतशिक्षारूपखड्गग्रहणं प्रति कृष्णकृतरोमराजिकामनोनयनरूपस्यापराधविषया हेतुत्वप्रतीत्या वस्तुतो रोमराज्यपहाराभावेनासिद्धविषया हेतूत्प्रेक्षा व्यञ्जकाभावात् गम्या । वृत्त्यनुप्रासेन संसृष्टिः ॥ १७ ॥

**नितम्बिनीतुङ्गकुचाचलाञ्चलान्निपात्य [1]नाभीकपटावटे स्मरः ।**
**गृहीतरोमावलिशृङ्खलो दृढं बबन्ध [2]तन्मानसगन्धसिन्धुरम् ॥ १८ ॥**

**नितम्बिनीति**—स्मरो मदनः । तस्य कृष्णस्य मानसं मन एव गन्धसिन्धुरं मत्तमतङ्गजम् । नितम्बिन्याः रुक्मिण्याः तुङ्गात् कुचाचलाञ्चलात् कुचगिरिशृङ्गात् । नाभिरिति कपटो व्याजो यस्य तादृशे अवटे श्वभ्रे । "गर्तावटौ भुवि श्वभ्रः" इत्यमरः । निपात्य पातयित्वा । अथ गृहीता उपसंगृहीता रोमावलिः रोमराजिरेव शृङ्खला निगलादिरूपा आयसी रज्जुः येन तादृशस्सन् । दृढं गाढम् । बबन्ध निजग्राह । "बन्ध बन्धने" इति धातोः परस्मैपदे लिट् । यथा लोके गजग्राही पुरुषः क्वचन पर्वतप्रान्ते महान्तं गर्तमुत्पाद्याच्छाद्य तत्र सल्लकीक्षुपिप्पलादीनि प्ररोप्य तद्ग्रासलोभेन गिरिकटकात् अत्र पतितं तत उत्तरितुमक्षमं चिरोपोषितं नष्टसत्त्वं च सुग्रहं निगलैराबध्यानीय स्ववशीकरोति एवं मदनोऽप्यकरोत् किमिति भावः । हरिः नाभीदेशमनुस्मृत्य ततः चिरतरमनन्यचित्तोऽभूदिति भावः । सावयवरूपकमलङ्कारः । कैतवापह्नुतिगर्भ इति सङ्करः ॥ १८ ॥

**उदूढरोमालिनिभोरगाननः सुखं विशन्नाभिमृषासुरङ्गया ।**
**तदीयचेतोमिषतस्कराग्रणीरवाप नीवीपदमङ्गनामणेः ॥ १९ ॥**

**उदूढेति**—उदूढः परिधृतः चिन्तितः रोमालिः रोमावलिरिति निभः कपटो यस्य तादृशं उरगाननं भित्त्यादौ सुरङ्गादिविधानसाधनं फणिफणावदाकुञ्चिताग्रमायसमायुधं येन तादृशः । तदीयं कृष्णसम्बन्धि चेतश्चित्तमिति मिषः छद्म यस्य तादृशस्तस्कराग्रणीः चोरवरिष्ठः । नाभिमृषासुरङ्गया नाभीकपटसुषिरेण ।

[1] G. नाना-

[2] G. तां मानस-

सुखं अप्रयासम्। विशन् प्रविशन् सन्। अङ्गनामणेः रुक्मिण्याः। नीवीपदं जघनदेशं मूलधननिक्षेपस्थानं च कोशागारमिति यावत्। "नीवीपरिपणं मूलधनम्" इत्यमरः। अवाप प्राप। क्रमेण नीवीस्थानमनुध्यातवानिति भावः। समस्तवस्तुविषयं सावयवरूपकमलङ्कारः। स च श्लेषापह्नुतिभ्यामुत्थापित इति सङ्करः॥ १९॥

**उपेत्य रोमालिझराभिमुख्यभागुरोजमस्याः किल नाभिकूपतः।**
**निरन्तरे चन्दनकर्दमे चिरं न्यलीयतान्तर्मधुजिन्मनोझषः॥ २०॥**

उपेत्येति— मधुजितः कृष्णस्य मनश्चित्तमेव झषः मत्स्यः। "पृथुरोमा झषो मत्स्यः" इत्यमरः। अस्याः रुक्मिण्याः। नाभिरेव कूपः तस्मात्। रोमालिझरस्य रोमराजिरूपप्रवाहस्य गिरिनिर्झरस्येति भावः। आभिमुख्यं प्रतीपगमनं भजतीति तादृशस्सन्। मत्स्यस्य प्रवाहाभिमुखोद्गमनस्य प्रसिद्धतयायमपि झषः स्तनगिरितटादधःप्रसृतरोमालिकपटनिर्झरधारामवलम्ब्योद्गच्छन् सन्निति भावः। उरोजं स्तनम्। उपेत्य प्राप्य। निरन्तरे निबिडे। चन्दनकर्दमे पाटीरपङ्के स्तनतटचर्चित इति भावः। अन्तः अभ्यन्तरप्रदेशे। चिरं बहुकालम्। न्यलीयत तिरोहितोऽभूत्। तत्र स्वच्छन्दसञ्चारक्षमसलिलाभावात् तापभीत्या तत्रत्यचन्दनपङ्के तिरोदधे किमिति भावः। सावयवरूपकमलङ्कारः। निलयनस्य कण्ठोक्त्या भगवन्मनसोऽन्यत्र स्फुरणाभावरूपायां शून्यतायां तत्र संभावितचन्दनकर्दमतिरोभवनतादात्म्यसंभावना क्रियास्वरूपोत्प्रेक्षा अनुक्तविषया तत्र रूपकमुपकरोति। सा च व्यञ्जकाभावात् गम्येति केचित्॥ २०॥

**कुचस्थलात्कुङ्कुमपङ्कपिच्छिलान्निपत्य मग्नं बत नाभिकाह्रदे।**
**मनो मुरारेर्मदनस्समुद्धरन्नितम्बचक्रेऽभ्रमयन्नतभ्रुवः॥ २१॥**

कुचेति—मदनः स्मरः। कुङ्कुमपङ्कैः काश्मीरद्रवैः पिच्छिलात् व्याप्तात्, कर्दमिततया पदन्यासमात्रेण प्रस्खलनस्वरूपयोग्यादिति भावः। कुचस्थलात स्तनतटात्। निपत्य प्रस्कन्द्य पतित्वेत्यर्थः। नाभिका नाभिरेव ह्रदः अगाधजलाशयः। "अगाधजलो ह्रदः" इत्यमरः। मग्नं निमज्जितम्। मङ्क्त्वा पीतोदकमुच्छूनमन्यत्र चलितुमक्षमतया तत्रैव परिलुठदिति भावः। मुरारेः कृष्णस्य। मनः चित्तम्।

समुद्धरन् उन्मज्जयन् सन्निति भावः। नतभ्रुवो रुक्मिण्याः। नितम्ब एव चक्रे कुलालचक्रे। अभ्रमयत् भ्रामयामास। बतेति कष्टार्थे। महानयं प्रमाद इति भावः। क्वचित्प्रमादाज्जले निपतितस्य भारवशादधोनिमग्नस्यावशादास्यनासिकादिद्वारा उच्छ्वासनिपीतसलिलोच्छूनस्योज्जीवनाय पीतसलिलोद्गमनार्थं कुलालचक्रे भ्रमणस्य लोकसिद्धत्वादिति भावः। हरिः चिरं नाभीमनुध्याय ततो नितम्बबिम्बमन्वचिन्तयदिति भावः। अत्र मनःकर्तृकायां नाभीकूपचिरनिध्यानानन्तरभाविन्यां नितम्बपरिवर्तनक्रियायां नाभिकूपनिमग्नमनःपरिपीतसलिलोद्गमनार्थकमदनकर्तृककुलालचक्रभ्रमणक्रियातादात्म्यसंभावना क्रियास्वरूपोत्प्रेक्षा सावयवरूपकानुप्राणितेति सङ्करः। नाभेर्ह्रदत्वरूपणेन तत्पतितमग्नस्य चेतसश्चेतनपुरुषत्वारोपणस्य मदने तत्संरक्षकपुरुषत्वरूपणस्य गम्यतया एकदेशविवर्तिसावयवरूपकमेव प्राधान्येन प्रतीयते। उत्प्रेक्षा तु व्यङ्ग्येति तत्त्वम्॥ २१॥

**नितम्बचक्रं [1]निरवद्यमङ्गनामणेर्मुकुन्दो मनसास्पृशद्यदा।**
**निरास्थदास्थां निजचक्रके तदा ततो विधत्तेऽनुशयस्थितिं नु तत्॥**

**नितम्बेति**—मुकुन्दः कृष्णः। अङ्गनामणेः रुक्मिण्याः। निरवद्यं निर्दोषम्। नितम्बचक्रं श्रोणीमण्डलं नितम्बमेव चक्रं सुदर्शनं चक्रायुधमित्यर्थः। न पुनश्चक्रतुल्यं नितम्बमित्युपमितसमासः। निरवद्यमिति धर्मप्रतिपादनात्, "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति सामान्यधर्माप्रयोग एवोपमितसमासविधानात्। यदा यस्मिन् काले प्राथमिकरुक्मिणीवृत्तान्तश्रवणसमय इत्यर्थः। मनसा चित्तेन। अस्पृशत् पस्पर्श अचिन्तयदित्यर्थः। तदा तस्मिन् काले तदारभ्येत्यर्थः। निजचक्रके स्वीयचक्रायुधे। आस्थां अभिलाषम्। निरास्थत् पर्यत्यजत्। निपूर्वात "असु क्षेपणे" इति धातोः परस्मैपदे लङ्। ततोऽपि नितम्बचक्रस्यात्यन्तमनोहरतया तल्लाभसंभावनामात्रेण ततोऽल्पतया स्वचक्रे उपेक्षामकरोदिति भावः। अमुमर्थं हेतूपन्यासपूर्वं साधयति। ततो नु तस्मात्कारणात्खलु उपेक्षाकरणेन निमित्तेन किलेत्यर्थः। तत् तदीयं चक्रायुधम्। अनुशयं पाणौ। "पञ्चशाखः शयः पाणिः"

[1] G. नितम्बबिम्बम्.

इत्यमरः । स्थितिं निवासम् । विधत्ते तनुते । अनुशयेन संशयेन सुचिरपरिचिते निखिलशत्रुवर्गनिग्रहसाधने च मयि नितम्बचक्रस्मृतिमात्रेणैवैवमुपेक्षाकारी कृष्णः साक्षान्नितम्बचक्रस्यैव लाभे किं वा न कुर्यात्। अत इदानीमेवैनं त्यक्ष्याम्याहो द्रक्ष्यामि किञ्चित्कालमिति सन्देहेनेत्यर्थः । स्थितिं अवस्थानं करोति । अतः चक्रायुधस्य ससन्देहावस्थानेन कृष्णोपेक्षा तद्धेतुतया रुक्मिणीनितम्बचक्रस्मृतिश्च निगीर्यत इति भावः । अत्र चक्रस्य हरिकरावस्थाने श्लेषमूलकतयाध्यवसितेन ससन्देहावस्थानेन कार्येण तद्धेतुभूतं कृष्णकृतं चक्रोपेक्षणमनुमीयत इत्यनुमानालङ्कारः ॥

वस्तुतश्चक्रानादरप्रतीत्या अरतिर्नाम विप्रलम्भावस्था व्यज्यते । "अरतिस्तु भवेद्द्वेषो हृद्येष्वपि च वस्तुषु" इति लक्षणात् ॥ २२ ॥

**अवाप्य [1]काञ्चीस्थलमङ्गनामणेः समेत्य [2]मुक्तावलिभिस्सदा चिरम् ।**
**अथोरुरम्भापरिरम्भसंभ्रमस्पृहामहो भूमिभृदाशयो दधौ ॥ २३ ॥**

**अवाप्येति**—भूमिभृतः कृष्णस्य आशयः छन्दः पुल्लिङ्गात् कश्चित्पुमानिति च व्यज्यते । अङ्गनामणेः रुक्मिण्याः । काञ्चीस्थलं जघनम् । काञ्चीति प्रसिद्धं पुण्यं मुक्तिक्षेत्रं च । अवाप्य प्राप्य । मुक्तावलिभिः मेखलानिबद्धमौक्तिकपङ्क्तिभिः । मुक्तानां जीवन्मुक्तानां ब्रह्मज्ञानिनां श्रेणिभिश्च । चिरं बहुकालम् । सदा सन्ततं अविच्छेदेनेति यावत् । समेत्य । अथ अनन्तरम् । ऊरुरम्भयोः रम्भासदृक्षयोरूर्वोः परिरम्भस्य परिष्वङ्गस्य संभ्रमे त्वरया स्पृहां वाञ्छां, उर्वीं बलीयसीं रम्भाख्यदेवयोषितः परिष्वङ्गे आलिङ्गनविलासे स्पृहां इच्छां रम्भासंभोगवाञ्छामित्यर्थः । दधौ अबिभ्रत् । दधातेः लिट् । अहो अद्भुतमित्यर्थः । मेखलामौक्तिकजालपरिष्कृतरुक्मिणीनितम्बजघनादिपरिचिन्तनानन्तरं तस्या ऊरू पर्यचिन्तयदिति भावः । काञ्चीनामकपुण्यक्षेत्रमवाप्य तत्रैव जीवन्मुक्तैः ब्रह्मविद्भिः संसर्गं च कृत्वा नश्वरं रम्भासङ्गादिविषयामिषमाचकाङ्क्ष इति महदाश्चर्यमिति भावः । मुक्तिक्षेत्रे मुक्तैः सह संसृज्यापि रम्भापरिष्वङ्गमैच्छदिति विरोधस्य सक्थ्याश्लेषपरतयाभासीकरणात् विरोधाभासालङ्कारः ॥ २३ ॥

[1] G. काञ्चीपद.

[2] G. मुक्तावलिभिश्च सादरम्.

[1]अनर्घजङ्घाधिगतिं [2]वधूमणेरमन्यतोच्चैर्जयकाहलीगतिम् ।
पदद्वयप्राप्तिमपि क्रमोदितामुदारपद्मोपगतिं तदाशयः ॥ २४ ॥

**अनर्घेति**—तस्य कृष्णस्य आशयः छन्दः । वधूमणेः रुक्मिण्याः । अनर्घयोः अमूल्ययोः लोकोत्तरयोरित्यर्थः । जङ्घयोः प्रसृतयोः गुल्फजान्वन्तरालावयवयोरित्यर्थः । "जङ्घा तु प्रसृता" इत्यमरः । अधिगतिं प्राप्तिम् । उच्चैः उत्कृष्टां जयकाहल्योः विजयसूचकबिरुदरूपककाहलीवाद्यद्वयस्य गतिं अधिगतिं प्राप्तिं बिरुदावाप्तितुल्यमिति भावः । तथा क्रमेण पौर्वापर्येण उदितां प्रवृत्ताम् । पदद्वयस्य चरणद्वन्द्वस्य प्रकरणाद्रुक्मिण्या इत्यर्थः । प्राप्तिमपि लाभमपि । उदारयोः प्रौढयोः पद्मयोः कमलयोः उपगतिं प्राप्तिम् । अन्यत्र पदद्वयस्य चरणद्वयप्रमितभूभागमात्रस्य लाभमपि उदारस्य गम्भीरस्य अपरिक्षीणस्येत्यर्थः । पद्मस्य पद्माख्यनिधेः प्राप्तिमित्यर्थः । अमन्यत मेने । "मनु अवबोधने" इति धातोः आत्मनेपदे लङ् । जङ्घयोर्द्वयं काहलीतुल्यतया चरणद्वितयमपि कमलतुल्यतया च मेने स्वस्य तत्प्राप्तिं च अतिशयितबिरुदलाभवत् निधिलाभवच्च मेने इति भावः । श्लेषालङ्कारः ॥ २४ ॥

समानशीलेषु [3]समग्रमिन्द्रियेष्वखर्वनिर्वेदकृतार्तिपूर्तिषु ।
असुख्यदस्याः कथया हरेः श्रुतिः कुतो व्यवस्था कुटिलात्मनां भवेत् ॥

**समानेति**—अथ कृष्णस्य रुक्मिणीगुणाश्रयसमुद्भूतस्य तद्विषयकाभिलाषजविप्रलम्भश्रृङ्गारस्थायिनो रतिभावस्य विभावानुभावसात्त्विकसञ्चारिभावसमुल्लासाद्रसभावापत्तये सर्गद्वितीयपद्यमारभ्यालम्बनविभावरूपरुक्मिणीतदङ्गोपवर्णनमारचय्य सांप्रतं तदुद्दीपनविभावान् प्रपञ्चयति पञ्चभिः । हरेः कृष्णस्य । समानं सदृशं शीलं चरित्रं सुखदुःखादिकं येषां तादृशेषु । इन्द्रियेषु चक्षुरादिषु । लोके कस्मिंश्चित्सन्तुष्टे तदिन्द्रियाण्यपि प्रसन्नानि भवन्ति तस्मिन् दुःखिते तु तान्यपि कलुषाणि भवन्तीति नियतत्वादिति भावः । समग्रं निश्शेषं,

[1] G. अनर्घजङ्घातिगतिं. [2] G. वधूमणेरगाहतोच्चैः

[3] A[1] and G. समक्षम्.

सर्वेष्वपीन्द्रियेष्विति भावः। अखर्वेण अनल्पेन निर्वेदेन विषयानुत्सेकेन कृता संपन्ना अभिव्यञ्जितेति यावत्। आर्तीनां व्यथानां पूर्तिः पौष्कल्यं येषां तादृशेषु सत्सु, कृष्णस्य चक्षुरादिषु निरुत्साहतया विषयविमुखेषु सत्स्विति भावः। श्रुतिः श्रोत्रम्। हरेः श्रवणेन्द्रियमेकमेवेत्यर्थः। अस्याः रुक्मिण्याः। कथया चरितेन, चरितश्रवणेनेति भावः। असुख्यत् सुखमभजत्। रुक्मिणीविरहपर्याकुलतया सकलविषयविमुखोऽपि रुक्मिणीचरितश्रवणेन किञ्चिद्विरहव्यथाविनोदनमन्वभवदिति भावः। अमुमर्थं समर्थयति— कुटिलः वक्रः आत्मा स्वरूपं आकारः स्वभावश्च येषां तादृशानाम्। व्यवस्था मर्यादा नीतिमार्गानुवर्तनम्। कुतः कथं भवेत्, न भवेदेवेत्यर्थः। तथा च श्रोत्रस्य शष्कुलीवत् वक्रतया अव्यवस्थितत्वेन स्वसदृशेषु खिन्नेष्वपि श्रुतेः सुखानुभवो युज्यत एवेत्यर्थः। अत्र रुक्मिणीविरहविह्वलस्य कृष्णस्य श्रुतौ सदृशानीन्द्रियाण्यपहाय स्वयमेव सुखानुभवस्यायुक्तत्वमुद्भाव्य कुतो व्यवस्थेति सामान्येन समर्थनादर्थान्तरन्यासः श्लेषानुप्राणित इति सङ्करः। अत्र विप्रलम्भशृङ्गारसंभावितासु दशावस्थासु चक्षुःप्रीतिरिति प्रथमावस्थायामुपलक्षणतया श्रवःप्रीत्यादीनामप्यनुप्रविष्टत्वावश्यंभावेन प्रकृते रुक्मिण्याः साक्षाद् दर्शनाभावेन तत्प्रतिच्छन्दकरणस्याप्यसंभवेऽपि तदुपलक्षिता श्रवःप्रीतिरिह प्रतिपादितेति प्रथमावस्था प्रतिपादिता भवति ॥ २९ ॥

**अनारतं हन्त निनिन्द नारदं शुभोत्तरोक्तिं शुकमप्युपैक्षत।**
**न पुण्डरीकेऽपि स नर्म निर्ममे प्रियेऽपि[1] न प्रीतिमुशन्ति योगिनः[2] ॥**

**अनारतमिति**—सः कृष्णः। अनारतं सन्ततम्। नारदं जलदम्। "आपो नारा इति प्रोक्ता आपो वै नरसूनवः" इति स्मृतेः। ब्रह्मसूनुं देवर्षिं च। निनिन्द व्यगर्हयत्, मेघस्य विरहोद्रेककारित्वादिति भावः। तथा शुभेन पूर्वाचरितपुण्येन उत्तरा अधिका स्वेतरविहगदुरवगमा उक्तिः चतुरभाषणं यस्य तादृशम्। यद्वा शुभा मङ्गळकारिणी वाक् उक्तिः यस्य। "गृहे पारावता धार्याः शारिका वै शुकास्तथा। वनन्ति धारिता नित्यं भूतबाधां गृहस्य वै ॥" इति स्मृत्या

[1] G. प्रियेषु.

[2] G. प्रीतिमयन्त्ययोगिनः.

धारणस्य क्षेमसाधनप्रतिपादनात् शुकवाक्यस्य शुभोत्तरत्वसंभवात् । अन्यत्र शुभं श्रेयः ब्रह्मज्ञानलक्षणं उत्तरं समनन्तरभावि यस्या इति शुभोत्तरा तादृशी उक्तिर्यस्य। तादृशं शुकं[कं] महर्षिप्रवर्तितभागवतश्रवणेन ब्रह्मज्ञानोदयादिति भावः । शुकं कीरं व्याससूनुं मुनिं च । उपैक्षत, उपेक्षाविषयीचकार निनिन्देति भावः । उपपूर्वादवज्ञार्थात् "ईक्ष दर्शने" इति धातोरात्मनेपदे लङ् । तथा पुण्डरीके कमले पुण्डरीकनामनि भगवद्भक्ते महर्षौ । नर्म क्रीडां प्रीतिमिति यावत् । न निर्ममे न चकार । निपूर्वात् [माङः] कर्तरि लिट् । कमलमेघादीनामुद्दीपनविभावतया विरहोद्रेककारितया तद्दर्शनश्रवणादिना हरिः व्यथितोऽभूदित्यर्थः । नारदस्य शुकस्य पुण्डरीकाख्यमहर्षेश्च परमभागवतत्वेन तेष्वप्रीतिनिन्दोपेक्षाकरणं कथं, कथं वा सर्वेन्द्रियाह्लादकेषु मेघादिष्वप्रीतिरिति अमुमर्थं समर्थयति । योगिनः विरहिणः अन्यत्र योगिनः परिशीलितराजयोगहठयोगा आत्मविदः । प्रिये दर्शनीयेऽपि वस्तुतो रमणीयेऽपीत्यर्थः । प्रीतिं सुखम् । नोशन्ति न प्राप्नुवन्ति । संभोगश्रृङ्गारे यानि यानि सुखातिशयाधायकानि भवन्ति सर्वाण्यपि तानि प्रियामेलनाभावे विरहव्यथाया एव पोषकाणि भवन्तीति सुव्यक्तमित्यर्थः । अन्यत्र प्रियेऽपि इन्द्रियाह्लादने विषये सुहृद्यपि। प्रीतिं विशेषाभिमानं उत्कण्ठां वा पक्षपातं वा । नोशन्ति न प्राप्नुवन्ति । जितेन्द्रियाणां अरिमित्रोदासीनत्वादिभेदमन्तरा सर्वत्र समदृष्टीनां निर्ममानां निरीहाणां निर्द्वन्द्वानां परमयोगिनां कुत्रापि विशेषाभावेन सुखदुःखयोरनुत्पादादिति भावः । अत्र विशेषरूपायाः मेघाद्यप्रीतेः नारदाद्यप्रीतेश्च प्रियेऽपीत्यादि सामान्येन समर्थनादर्थान्तरन्यासः श्लेषानुप्राणित इति सङ्करः ॥ २६ ॥

**समीरपोतं समगर्हताङ्गदं निरास्थदक्षाधिपतिं निनिन्द यत् ।**
**विदेहकन्याविरहादपि प्रभुर्विदर्भसुभ्रूविरहेण विव्यथे ॥ २७ ॥**

**समीरेति**—प्रभुः श्रीकृष्णः । यत् यस्मात्कारणात । समीरपोतं मन्दमारुतं वायुसुतं हनूमन्तं च । "पोतः पाकोऽर्भको डिम्भः" इत्यमरः । समगर्हत अभ्यदूषयत । "गर्ह कुत्सायाम्" इति धातोरात्मनेपदे लङ् । तथा अङ्गदं केयूरं वालिसूनुं च । निरास्थत्

प्रत्यक्षिपत् । निरुपसर्गपूर्वात् "असु क्षेपणे" इति धातोः कर्तरि लङ् । तथा ऋक्षाधिपतिं नक्षत्रनाथं चन्द्रम् । "नक्षत्रमृक्षं भं तारं" इत्यमरः । अन्यत्र ऋक्षाणां भल्लूकानां अधिपतिं जाम्बवन्तं च निनिन्द समदूषयत् । विरहिणो मन्दपवनचन्द्रयोः तापोत्कर्षाधायकतया तयोर्निन्दायाः बाहुकार्श्येन स्वस्थानप्रच्युतपरित्यागस्य अरतिश्रमादिना भूषातिरस्करणस्य च संभावितत्वेऽपि श्लेषमूलतयाध्यवसितं हनूमन्निन्दनं अङ्गदनिरसनं जाम्बवन्निन्दनं परमस्यैव कृष्णस्य पूर्वतनरामावतारे सीताविरहावस्थायां नासीत्, तेषां सहायत्वेन स्वीकरणात । इह तु अध्यवसायमूलकतया हनुमन्निन्दादीनामपि संभवात्, हृद्यवस्तुविद्वेषरूपा अरतिर्बलवत्तरेति भावः । तत् तस्मात्कारणात् । विदेहकन्याविरहादपि सीताविरहावस्थातः । विदर्भसुभ्रूविरहेण रुक्मिणीविरहेण । विव्यथे व्यथितो बभूव । "व्यथ हिंसायाम्" इति धातोः दुःखार्थादात्मने पदे लिट् । अत्र समीरपोतगर्हणादिरूपबलवत्तरकार्यमुखेन तद्धेतुभूतविरहव्यथाया बलवत्तरत्वानुमानादनुमानालङ्कारः, श्लेषोत्थापित इति सङ्करः ॥ २७ ॥

**निरास तारापतिमेष नो मुदन्नवाञ्जनानन्दनकेलिषु व्यधात् ।**
**बबन्ध चक्रेऽप्यरतिं तदा ध्रुवं रघूद्वहीभावजवासनावशात् ॥ २८ ॥**

**निरासेति**—एषः कृष्णः । रामकृष्णादिरूपावतारभेदेऽपि वस्तुगत्या सर्वत्रैकरूप इति भावः । तदा रुक्मिणीविरहावस्थायामित्यर्थः । रघूद्वहीभावे रामत्वे रामात्मनावस्थितिसमय इति भावः; जायत इति तादृश्याः वासनायाः संस्कारस्य वशात् अधीनतया उद्बोधादिति भावः । तारापतिं चन्द्रं वालिनं च । निरास निराचकार अधिचिक्षेप जघान च । तथा जनान् प्राणिनः आनन्दयन्ति हर्षयन्तीति तादृशीषु केळिषु उद्यानविहृतिषु नवां नवनवोद्भूताम् । मुदं प्रीतिम् । न व्यधात् नाकरोत् । विपूर्वाद्दधातेर्लङ् । अतिरमणीयतया नयनासेचनकेष्वपि प्रीतिं नाभजदिति भावः । अन्यत्र अञ्जनानन्दनस्य अञ्जनाप्रसूनोः हनूमतः केळिषु विहृतिषु अक्लेशकृतेषु समुद्रतरणसीतासमाश्वासनवनभंजनरक्षोनिधनादिव्यापारेष्वित्यर्थः । मुदं वा हर्षं च, वाकारश्चकारार्थः । नो न व्यधात् । द्वौ नञौ

प्रकृतमर्थं दृढीकुरुतः नातनोदिति न, अतनोदेवेत्यर्थः । तथा चक्रे राष्ट्रे राज्यतन्त्रे । किं बहुना, सर्वप्रपञ्चेऽपीत्यर्थः । यद्वा चक्रे निजचक्रायुधे, अन्यत्र चक्रे चक्रवाके । अरतिं अप्रीतिं । बबन्ध अकृत । "बन्ध बन्धन" इति धातोर्लिट् । अरतिर्नाम सञ्चारीभावमापेदे इत्यर्थः । "अरतिस्तु भवेद्द्वेषो हृद्येष्वपि च वस्तुषु" इति लक्षणात् । ध्रुवं निश्चितम् । रामावतारकृतानां तारापतिनिरासादीनामिह कृष्णावतारेऽप्याचरणं स्वरूपाभेदात् पूर्वजन्मवासनानिर्वर्तितं किमिति भावः । अत्र रामावतारे सीताविरहपर्याकुलं पम्पातीरगतं राममभिवीक्ष्य पम्पायां मिथुनीभूय क्रीडन्तश्चक्रवाकाः परिजहसुः । ततः कुपितो रामः तान्वियुक्ता भवथेति शशाप । ततस्तैरनुनीतः तं च शापं निशामात्रविश्रान्ततया सञ्चुकोच । तत आरभ्य चक्रवाका रात्रिमात्रे वियुक्ता दिवा च युक्ता भवन्तीतीतिहासोत्रानुसन्धेयः । अत्र श्लेषमूलतया चन्द्रादिनिन्दाध्यवसितवालिनिग्रहादीनामिहानुष्ठानं प्रति पूर्वजन्मवासनाया अहेतोर्हेतुत्वप्रतीत्या हेतूत्प्रेक्षा ॥ २८ ॥

**असावरिश्रेणिकदर्थनापरे[1] विभावयन्राजनि मित्रभावनाम् ।**
**व्यधत्त विद्वेषपदं तु तद्द्विषं कुहूं मुहुर्नीतिविदां पथि स्थितः ॥२९॥**

असाविति—नीतिविदां राजनीतिज्ञानां । पथि मार्गे । स्थितः नीतिशास्त्राविरोधेन निखिलकार्यकारीत्यर्थः । असौ कृष्णः । अरीणां चक्राणां चक्रवाकानामित्यर्थः । "कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः" इति कोशात् रथाङ्गनाम्नां सर्वेषां चक्रवाकवाचकत्वात् । तेषां श्रेणेः बृन्दस्य कदर्थनापरे व्यथाकारिणि । राजनि चन्द्रे । चन्द्रोदये चक्रवाकविरहव्यथायाः कविलोकप्रसिद्धत्वादिति भावः । अन्यत्र अरिश्रेणीनां शत्रुबृन्दानां कदर्थनापरे स्वप्रतिपक्षे विद्वेषिणीत्यर्थः । राजनि भूपतौ । मित्रभावनां सूर्यबुद्धिम् । विभावयन् प्रपञ्चयन् सन् । अन्यत्र सुहृत्त्वबुद्धिं विभावयन् प्रख्यापयन् । द्रष्टॄणां बोधयन् सन्नित्यर्थः । विरहावस्थायां चन्द्रस्यातितापकरत्वादित्यर्थः । तस्य मित्रत्वेन गृहीतस्य चन्द्रस्य द्विषं शत्रुम् । पुनः श्लेषमूलकतया चन्द्रस्वरूपनाशकतया चन्द्रविरोधिदर्शान्तरूपतयाध्यवसितमित्यर्थः । कण्ठं [कुहूं] कोकिलरुतं नष्टेन्दुकलामावास्यांत्वित्यर्थः । मुहुः

[1] G. असावपिश्रेणि कदर्थिनापरे.

प्रतिपदं। विद्वेषपदं विरोधपात्रं। व्यधत्त अकरोत्। विपूर्वाद्दधातेरात्मने पदे लुङ्। अत्र श्लेषमूलकतया शत्रोः शत्रुत्वेनाध्यवसिते चन्द्रे सुहृत्वाद्यभजन्निति सूर्यबुद्धिकरणरूपया तच्छत्रुत्वेनाध्यवसिते कोकिलरुते च विद्वेषकरणरूपया च स्वक्रियया परेषां "शत्रोः शत्रौ च मित्रत्वं तच्छत्रौ शत्रुतामपि। तन्मित्रे मित्रतां कुर्वन्न कदाचन सीदति"। [इति] नीतिमार्गानुवर्तनरूपस्य सदर्थस्य बोधनात् सदर्थनिबन्धना निदर्शना। "स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव तु सा परा" इति लक्षणात्॥ २९॥

**विशामधीशस्य वियोगसंज्वरस्तथा ततानातनुतानवं तनौ।**
**यथामुना मन्दसमीरणादपि प्रकम्पसम्पल्लघु पर्यचीयत॥ ३०॥**

**विशामिति**—वियोगसंज्वरः विरहज्वरः कर्ता। विशां जनानां अधीशस्य नायकस्य कृष्णस्य। "द्वौ विशौ वैश्यमनुजौ" इत्यमरः। तनौ देहे। तथा तावत्। यावत् कार्श्यं वक्ष्यमाणमन्दपवनस्पन्दमात्रतः प्रकम्पोत्पत्यनुकूलं भवति तावदिति भावः। अतनु अतिशयितं। तानवं कार्श्यं। ततान अतनोत्। तनोतेः कर्तरि लिट्। तदेवाह—अमुना कृष्णेन। विरहातिकर्शितेनेति भावः। मन्दसमीरणात् मलयपवनादपि मृदुतरं वहता समीरेणापि। प्रकम्पस्य वेपथुरूपस्य सात्विकभावस्य संपत् अतिशयः। अन्यत्र विधूननातिशयः। लघु द्रुतम्। "लघु क्षिप्रमरन्द्रुतम्" इत्यमरः। पर्यचीयत परिचिताभवत्। असकृत् अनुभवगोचराभवदित्यर्थः। विरहावस्थाकालिकं मन्दपवनपरिचयजनितवेपथुरूपपरिदध्य[दृश्य]मानसात्विकभावाध्यवसितेनात्यल्पानिलसंसर्गेऽपि वातनिबद्धसूक्ष्मपटवत्कम्पनेन तदनुगुणं कायकार्श्यमनुमीयत इति भावः। अनुमानमेवालङ्कारः॥ ३०॥

**अणोरणीयानिति यो हरिः पुरा पुराणवाण्या निरणायि केवलम्।**
**तथाविधोऽसौ ददृशे दृशा जनैः कृशोदरीतादृगयोगकर्शितः॥ ३१॥**

**अणोरिति**—यः हरिः कृष्णः परब्रह्मरूपतया श्रुतिप्रतिपादित इत्यर्थः। पुरा अद्यतनविरहावस्थातः पूर्वं केवलब्रह्मभावे इत्यर्थः। अणोः परमाणोरपि। अणीयान् अतिकृशीयान्। इति पुराणवाण्या केवलं श्रुतिमात्रेण। "अणोरणीयान्मह-

तो महीयान् " इति वेदरूपप्रमाणमात्रेण न पुनः प्रत्यक्षेणेत्यर्थः । निरणायि निश्चितः । प्रमाणान्तरानुपबृंहितश्रुतिरूपशब्दप्रमाणगोचरीकृत इत्यर्थः । असौ स कृष्ण इत्यर्थः । यः पुरेति पूर्वमुक्त्या असावित्यनन्तरमद्येत्यध्याहार्यम् । अद्य रुक्मिणीविरहावस्थायाम् । कृशोदर्याः रुक्मिण्याः तादृशा तादृक्षेण तथाविधदेहकार्श्यकारिणेत्यर्थः, अयोगेन विरहेण कर्शितः कार्श्यं प्रापितः सन् । जनैः कर्तृभिः । विरहावस्थामध्यक्षीकुर्वद्भिरिति भावः । दृशा चक्षुषा, चाक्षुषप्रत्यक्षेणापीत्यर्थः । तथाविधः अत्यन्ताणुरूपः अतिकृशतयेत्यर्थः । ददृशे दृष्टिविषयीचक्रे । " दृशिर् प्रेक्षणे " इति धातोः कर्मणि आत्मनेपदे लिट् । आभ्यां पद्याभ्यां कार्श्यं नामावस्था प्रतीयते । "कार्श्यं तु स्मरसन्तापविहिता तनुता तनोः । " इति लक्षणात् । अत्र दृशा ददृश इति प्रत्यक्षविषयस्यैव अत्यन्ताणुत्वासंबन्धेऽपि सम्बन्धवर्णनादतिशयोक्तिः । प्रत्यक्षप्रमाणोपोद्बलितः शब्दरूपः प्रमाणालङ्कारश्च ॥ ३१ ॥

**जनार्दनो निर्दयमर्दिताशयः स्वजन्मना हन्त [1]सुगन्धिधन्वना ।**
**भवेत्प्रमोदाय पराजयस्सुतादिति प्रतीतिं निरधारयन्मुधा ॥ ३२ ॥**

**जनार्दन इति**—जनार्दनः कृष्णः । जनान् पापिनः अर्दयति नरकादिषु नियुज्य पीडयतीति वा । जनानुत्पन्नानर्दयतीत्युक्त्या उत्पादयत्यर्दयति चेत्यर्थः । उत्पत्तिभङ्गयोरान्तरालिकतया स्थितेरपि सङ्ग्रहः । सृष्टिस्थितिपालनकारीति वा ; जनान् पुण्यजनान् यातुधानान् ; नामैकदेशे नामग्रहणात् निखिलराक्षसनिग्राहक इति वार्थः । यद्वा जनान् कामिनः अर्दयति मदनरूपं सुतं रमायामुत्पाद्य तन्मुखाद्युवजनं व्यथयितेत्यर्थः । इतरव्यथार्थं स्वयं पुत्रमुत्पाद्य स्वयं तेनैवमर्दित इति भवितव्यमेवेत्थमिति भावः । स्वजन्मना निजसुतेन । सुगन्धि कुसुमं धन्व यस्य तादृशेन मदनेन । निर्दयं निरनुक्रोशं यथा तथा । पिता पुत्र इति अनुबन्धमप्युत्सृज्येति भावः । मर्दितः दारितः आशयः हृदयं यस्य तादृशस्सन् । सुतात् पुत्रात् । पराजयः पराभवः । अर्थात् पितुरिति लभ्यते । प्रमोदाय हर्षाय । न तु दुःखायेति भावः । भवेत् स्यात् । इति एवंरूपाम् । प्रतीतिं लोकप्रख्यातिम् । " पुत्रादिच्छेत् पराभवम् " इति लोक-

[1] स.

वार्तामिति भावः। मुधा मिथ्याभूताम्, अग्निना सिञ्चेदित्यादिवदप्रमाणीभूतामित्यर्थः। निरधारयत् निश्चिकाय। निरुपसर्गपूर्वाद्धरतेर्णिजन्तात्कर्तरि लङ्। स्वपुत्रेणैव मदनेन कृतव्यथाया दुस्सहत्वस्य स्वानुभवगोचरत्वात् पुत्रकर्तृकपराभवपितृप्रमोदयोः भूयस्साहचर्यात् लोकनिरूढं व्याप्यव्यापकभावं स्वस्मिन् बाधितमचिन्तयदिति भावः। हन्त कष्टम्। अहो भगवतोऽपि विरहव्यथातिशय इति भावः। अहो पुत्रेणैव पितुर्व्यथेति च। विद्यावीर्यौदार्यादिना स्वतः पुत्रस्याधिकतया तथाविधस्य पराजयस्य सुखावहत्वेऽपि शस्त्रादिना तुदनमपि कुतो न दुःखमुत्पादयेदिति भावः। अत्र मतिर्नाम संचारीभावो व्यज्यते। "विमृश्य युक्तिभिः शश्वदर्थनिर्धारणं मतिः।" इति लक्षणात्। वृत्त्यनुप्रासः काव्यलिङ्गञ्च॥ ३२॥

**पुरा पुरारेरपि योऽभिनद्धनुः स एष वेषान्तरसंवृतः प्रभुः।**
**भवाभिभूतादतनोरपि क्षतिं बभाज कालो हि बली बलीयसाम्॥**

पुरेति—यः कृष्णः। रामकृष्णाद्यवतारभेदेऽपि वस्तुत एकोऽपीत्यर्थः। पुरा रामावतारे। पुरारेः मेरुधन्वनः त्रिपुरान्तकस्यापि। धनुः चापम्। सुमेरुसारभूतमित्यर्थः। जनकभवनपरिपूजितमिति भावः। अभिनत् बभञ्ज। "भिदृ़ द्वैधीकरण" इति धातोः परस्मैपदे लङ्। ईश्वरेण गुणारोपणेऽप्यभग्नमनेनारोप्यमाणे भग्नमित्यनेनेश्वरादतिबलित्वं व्यज्यते। वेषान्तरेण रामवेषाद्विभिन्नेनाद्यतनकृष्णवेषेण अन्तरितः संवृतः भेदेन प्रतीयमान इत्यर्थः। स एष प्रभुः तथाविधबलोपेतः कृष्णरूपी विष्णुरेव। भवेन शिवेन अभिभूतात् पराजितात्। अतनोः शरीरेणापि रहितात् मदनादपि। तेन मदनस्यात्यन्तापकृष्टतायां महदन्तरमिति व्यज्यते। क्षतिं बाणाहतिं मदनकृतां व्यथामिति भावः। बभाज प्राप। "भज सेवायाम्" इति धातोः परस्मैपदे लिट्। क्रूरदृष्टिमात्रात् मदनभस्मीकर्तुः महेश्वरादतिबलिनो मदनात्पराजयः कथमित्यतस्तत्समर्थयति—हि यस्मात्। कालः समयविशेषः। बलीयसां महाबलानामपि। बली अत्यन्तबलवान्। कालविशेषे महाबलिनोऽप्यल्पकैः परिभूयन्त एवेत्यर्थः। विरहावस्थायां मदनकृततुदनस्य

बलवीर्याद्यसमाधेयत्वादिति भावः । अत्र विरहकालिककृष्णपराभवरूपस्य विशेषस्य कालो हीति सामान्येन समर्थनात् अर्थान्तरन्यासः । पुरारेरित्यस्य धनुषो दृढत्वाभिप्रायगर्भस्य अतनोरिति शस्त्रादानप्रयोगानर्हतया परनिग्रहासमर्थत्वाभिप्रायगर्भस्य च विशेष्यस्य वेषान्तरसंवृत इत्यभेदेनाजय्यत्वाभिप्रायगर्भस्य भवाभिभूतादिति अल्पवीर्यत्वाभिप्रायगर्भस्य विशेषणस्य च सन्निवेशात् परिकराङ्कुरपरिकरावप्यत्रोपकुरुत इति सङ्करः ॥

केचित्तु सामान्यविशेषभावमन्तरा स्वापकृष्टादपकृष्टेन स्वस्य पराजय इत्यस्य समरन(?)सापेक्षस्य कालकृतत्वेन समर्थनात् काव्यलिङ्गमिति वदन्ति । बलीयसामिति सामान्यसमर्थनस्य स एष इति विशेषे पर्यवसानस्य स्पष्टत्वेन काव्यलिङ्गानवतार इति मन्तव्यम् ॥ ३३ ॥

**पुरः स्फुरत्युत्पलिनीविटे [1]हरिः दधौ दुरन्तां हृदरुन्तुदां व्यथाम् ।**
**अदक्षिणाक्षिस्फुरणे हि तत्क्षणात् भवन्ति भव्येतरभाजनं जनाः ॥**

**पुर इति**—उत्पलिनीविटे कुमुदिनीनायके चन्द्रमसीत्यर्थः । भगवतो विष्णुरूपस्य वामाक्षिभूते इति भावः । पुरः पूर्वदिग्भागे पूर्वकाले च । भाविव्यथातः पूर्वक्षणे इति भावः । स्फुरति द्योतमाने प्रकम्पमाने च सति । हरिः कृष्णः । सूर्येन्दुलोचनो विष्णुरिति च । हृदरुन्तुदां हृदयमर्मभेदिनीं । "अरुन्तुदन्तु मर्मस्पृक्" इत्यमरः । दुरन्तां अवसानरहितां चिरावस्थायिनीमिति भावः । व्यथां विरहार्तिं । दधौ बभार । विरहिणां चन्द्रोदये तापोन्मेषादित्यर्थस्य सुप्रसिद्धतयास्यार्थस्य समर्थनानपेक्षत्वेऽपि अर्थान्तरे चन्द्रप्रकम्पोत्तरकालिकं हरिव्यथोन्मेषरूपं समर्थनीयं समर्थयति । हि यस्मात् । अदक्षिणस्य दक्षिणादन्यस्य वामस्येत्यर्थः । अक्ष्णः स्फुरणे प्रकम्पने सति जायमाने । जनाः प्राणिनः । तत्क्षणात् वामाक्षिस्फुरणसमनन्तरमेव । भव्येतरस्य अभव्यस्य दुःखस्येत्यर्थः । भाजनं पात्रम् । भवन्ति जायन्ते । पुंसां वामाक्षिस्पन्दनस्य सन्निहिताशुभद्योतकत्वस्य निमित्तशास्त्रविहितस्य सर्वानुभवसिद्धत्वात् चन्द्राख्यवामाक्षिकंपे अनुपदमेव भगवतो व्यथावाप्तिर्युज्यत एवेति भावः । अत्र चन्द्रोदयसमनन्तरं कृष्णस्य व्यथावाप्ति-

[1] G. विभुः.

रूपस्य विशेष्यस्य वामाक्षिस्फुरणरूपदुर्निमित्तकृतत्वेन सामान्येन समर्थनादर्थान्तरन्यासः श्लेषानुप्राणितः ॥ ३४ ॥

**अमुष्य मन्दं चलितेऽपि मारुते मनस्यमन्दं समभावि शंकया ।**
**[1]तनूभुवापि प्रतिकूलता दधे क राज्ञि सौख्यं प्रतिकूलतां गते ॥ ३५ ॥**

**अमुष्येति**— मारुते पवने । मन्दं मृदु यथाभवति तथा । चलिते संचरति सति अपि । अमुष्य कृष्णस्य । मनसि चित्ते । शङ्कया अनिष्टाभ्यागमोत्प्रेक्षारूपया भियेति भावः । अमन्दं अत्यन्तम् । समभावि संबभूवे । शङ्कानामकः सात्विकभावो बभूव । महती भीतिर्बभूवेत्यर्थः । तथा तनूभुवा पुत्रेण मदनेनापि । प्रतिकूलता प्रत्यर्थिता । दधे जगृहे । शात्रवं प्रापद्यतेति भावः । अमुमर्थं समर्थयति । राज्ञि चन्द्रे भूपतौ च । प्रतिकूलतां विरोधित्वम् । गते प्राप्ते सति । सौख्यं सुखं । क कुत्र । भवेदिति शेषः । काका न भवेदेवेत्यर्थः । राज्ञि द्विष्टे "यथा राजा तथा प्रजा" इति सर्वप्राणिविरोधे फलति तस्य सर्वत्र दुःखमेवेति भावः । अत्र मन्दपवनसंचरणेऽपि शङ्कायाः पुत्रेणापि द्वेषस्य क राज्ञीत्यादिसामान्येन समर्थनादर्थान्तरन्यासः । राज्ञीति राजपदश्लेषायत्त इति सङ्करः ॥ ३५ ॥

**स एष जात्या कुटिलस्सनामतादुराग्रहाद्द्रुह्यतु शौरये विधुः ।**
**कथं नु सांसिद्धिकसौमनस्यमप्यबाधतामुं शरजालमाङ्गजम् ॥ ३६ ॥**

**स इति**—जात्या जन्मना । कुटिलः वक्राकारः दुर्जनश्च । स एष विधुः प्रतिकूलत्वेन प्रतिपादितश्चन्द्रः । "विधुः सुधांशुः" "विधुः श्रीवत्सलाञ्छनः" इति चामरः । शौरये कृष्णाय । सनामतया तुल्याभिधानत्वेन उत्पन्नात् दुराग्रहात् अनिमित्तोद्गतात् क्रोधात् । नामसाम्यस्य द्वेषहेतुत्वादिति भावः । द्रुह्यतु द्रोहं करोतु । कुटिलत्वान्नामसाम्यमेव निमित्तीकृत्य द्रोहकरणं वक्रस्य नात्यन्तविरोधीति कथंचित्तदभ्युपेयत इति भावः । सांसिद्धिकं स्वाभाविकं सौमनस्यं शोभनमनस्कत्वं यस्य तादृशम् । कुसुमत्वेन सुकुमारतया सकलजनानन्दैकनिदान-

[1] G. मनो.

भूतमित्यर्थः । दयाद्यष्टगुणोपेततया परद्रोहविमुखं परोपकारशीलं चेति भावः । आङ्गजं मदनसम्बन्धि । शरजालं बाणबृन्दं कुसुमसमूह इत्यर्थः । अमुं कृष्णम् । कथं किंनिमित्तम् । अबाधत अपीडयत् । बाधतेरात्मनेपदे लङ् । स्वभावतः कुसुमत्वेनात्यन्तं सुकुमारतया बाधनस्य न संभवः । शोभनमनस्कत्वेषूपकारस्यैव संभावनात् द्रोहस्तु दूरापास्त इति कथमिदं युज्यत इति भावः । अत्र पूर्वार्धे विचित्रवीर्यसुताय चन्द्राङ्गदाय द्रुह्यतश्चन्द्राङ्गदनाम्नो गन्धर्वस्येव चन्द्रस्य कृष्णं प्रति द्रोहाचरणस्याभ्युपेयतया युक्तत्वप्रतीत्या समालङ्कारः । उत्तरार्धे विषमालङ्कारः द्वयोः श्लेषमूलकत्वात् सङ्करः । चन्द्रकृतकृष्णद्रोहं प्रति नामसाम्यकृताग्रहस्याहेतोर्हेतुत्ववर्णनाद्धेतूत्प्रेक्षा व्यञ्जकाभावात् गूढा । तथा मदनशरनिकरस्य सुमनस्त्वेन परपीडनविरोधीत्यस्य मदनसायकतया आभासीकरणाद्विरोधाभासालङ्कारः । द्वयोः श्लेषमूलकतया संकीर्णयोः संसृष्टिरित्याहुः ॥३६॥

एतावता विप्रलम्भशृङ्गारस्थायिनः रतिभावस्य विरहावस्थायामालम्बनादिभिः परिपोषं कविप्रोढोक्त्या प्रतिपाद्य संप्रति कविनिबद्धवक्तृप्रौढोक्तिमूलकतया तमेवाह—

**मनोगतामुन्मदमन्मथव्यथां वसुन्धरेशो [1]वचसि न्यवीविशत् ।**
**विना परीवाहविधिं जलाशये महत्तरो माति किमंभसां भरः ॥ ३७ ॥**

**मनोगतामिति**—वसुन्धरेशः भूपतिः कृष्णः । मनोगतां मनसा केवलमनुभूतां । इदानीं तु दुःखपारवश्येन वागुच्चारणमन्तरा सोढुमशक्यामित्यर्थः । उन्मदस्य अतिशयितमदस्य मन्मथस्य मदनसम्बन्धिनीं मदनकृतामित्यर्थः व्यथां पीडां । वचसि वाचि । न्यवीविशत् निवेशयामास । व्यथाया बलवत्तरत्वेन "विरमति कथनं विना न खेदः" इति कृत्वा स्वयं वाचा स्वव्यथोपपादनमाचचारेत्यर्थः । उक्तार्थमुपदर्शयति—जलाशये सलिलाधारे । महत्तरः अत्यन्तातिशयितः । सर्वतो निबद्धसेतुप्रमाणातीत इत्यर्थः । अंभसां सलिलानां । भरः अतिशयः । परीवाहस्य अधिकजलोत्सर्गस्य विधिं विधानं । तदनुकूलकुल्यादिपरिकल्पन-

[1] A. मनसि.

मित्यर्थः। विना अन्तरेण। माति किं पर्याप्तो भवति किं न मात्येवेत्यर्थः। परीवाहविनाभावे स्वयमेव सेतुं भित्वा बहिः परिवहत्येवेति भावः। अत्र हृदये अमान्तीं व्यथां वाचा बहिर्व्यसर्जयदित्यस्यैवार्थस्य जलाशये अंभसां भरः परीवाहविधिं विना न मातीति पृथक्पदेन प्रतिपादनात् प्रतिवस्तूपमालङ्कारः। "वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता" इति लक्षणात्। बिम्बप्रतिबिम्बभावाभावान्न दृष्टान्तसंभवः॥ ३७॥

**वियोगविश्राणितवैधुरीधुरं मनो विदन्मे मलयानिलोऽधुना।**
**[1]दुनोति वेगे बहुधा धुतोऽमुना पराजितास्स्युः समयप्रतीक्षिणः॥३८॥**

**वियोगेति**—अमुना वक्ष्यमाणेन मदीयेन मनसा। वेगे जवे विषये। बहुधा बहुप्रकारेण। धुतः पराभूतः। मनसः पवनादतिजवित्वादिति भावः। मलयानिलो मलयपवनः कर्ता। अतिवेगवत्तया जगद्विख्यात इति भावः। ततश्च अधुना सांप्रतं विरहावस्थायामित्यर्थः। मे मम। मनश्चित्तं कर्म। पूर्वमसकृत् जवे स्वपराभवमिति भावः [?]। वियोगेन विरहतापेन विश्राणिता वितीर्णा वैधुर्याः व्यथायाः धूः भरः यस्मै तादृशम्। विरहज्वरग्लपिततया प्रहीणबलवेगं रुक्मिणीगात्रादन्यत्र गन्तुमक्षमतया तत्रैव चिरात् प्रत्यवयवं परिवर्तमानमिति भावः। विदन् जानन् सन्। इदमिदानीं हीनसत्वमतोऽयमेवास्य निग्रहावसर इति जानन्निवेति भावः। दुनोति पीडयति लट्। ननु पूर्वमसकृत् पराभूतस्य कथं पुनरभियोग इत्यतोऽमुमर्थं समर्थयति। पराजिताः केनचिद्बलवता परिभूताः जना इति शेषः। समयं स्वविजेतुः शत्रोर्बलह्रासावसरं प्रतीक्षन्ति प्रतिपालयन्तीति तादृशाः। स्युः भवेयुः। तथाविधरन्ध्रलाभे पुनरभियुज्य प्रहरेयुरेवेति भावः। अत्र मलयानिलकृतकृष्णचित्तव्यथनं प्रति मनसा पूर्वपराभूतस्य पवनस्य मनसो वियोगव्यथितत्वपरिज्ञानं रन्ध्रलाभविधया अहेतुरेव हेतुतयोपन्यस्तमिति हेतूत्प्रेक्षा व्यंजकाभावात् गम्या। ईदृशस्य चार्थस्य विशेषरूपस्य पराजिताः समयप्रतीक्षिणः स्युरिति सामान्येन समर्थनादर्थान्तरन्यासः॥ ३८॥

[1] G. धुनोति.

[1]निरस्तचक्रप्रणयो निमेषतो हठादधिक्षिप्ततराक्षसंगतिः ।
मनोरथः शीर्यति हन्त मामकः समीरपोतेऽपि समीपमेयुषि ॥ ३९ ॥

निरस्तेति—मामकः मदीयः । मनश्चित्तमेव रथः स्यन्दनः कर्ता । समीरपोते मलयपवने ईषद्वाते । समीपं सन्निकृष्टदेशम् । एयुषि प्राप्तवति सत्यपि । निमेषतः त्रुटिमात्रेण । निरस्तः निराकृतः चक्रे सुदर्शने प्रणयः प्रेमा चक्रायुधादानोपलालनादिश्रद्धेति भावः । येन तादृशः । अन्यत्र निरस्तचक्रैः रथाङ्गैः प्रणयः संसर्गः अक्षे योजनं यस्य तादृशः । प्रशिथिलितचक्राक्षबन्ध इति भावः । तथा हठात् बलात्कारेण । अधिक्षिप्ततरा अतिदूरनिरस्ता अक्षैश्चक्षुरादिभिरिन्द्रियैः सह सङ्गतिः संसर्गः यस्य तादृशस्सन् । आत्मा मनसा संयुज्यते मन इन्द्रियेणेति विषयावबोधहेतुभूतचक्षुरादिसंसर्गशून्य इत्यर्थः । बाह्यविषयज्ञानशून्यः केवलरुक्मिणीचिन्तननिरत इति भावः । अन्यत्र हठात् अधिक्षिप्ततरा अक्षाणां स्यन्दनाधारदारुविशेषाणां सङ्गतिः मेलनं कूबरोपरि पीठादिसम्बन्ध इत्यर्थः । यस्य तादृशश्च सन् । शीर्यति शिथिलीभवति । हन्त कष्टम् । अत्र हरिमानसारोपितस्य चक्राक्षादिशताङ्गसङ्गतस्य प्रकृतेऽप्यसंभावितस्पन्दनस्य स्यन्दनस्य अस्पृशतापि वातपोतेन दृढतरबन्धोत्सादनविशरणदूरनिरसनादेश्च यो विरोधस्तस्य हरिचेतसो मलयमारुतसमागमजनितव्यथया विषयेष्वप्रवृत्त्या निजायुधानादरेण चाभासीकरणाद्विरोधाभासो रूपकानुप्राणित इति सङ्करः ॥३९॥

वृषाकपायीप्रणयागसि व्यथां विचिन्त्य मन्दानिलतो वितर्कये ।
व्यधत्त वातंधयवल्लभं हरो विभूषणं विभ्रमतल्पमच्युतः ॥ ४० ॥

वृषाकपायीति—हरः शिवः । अच्युतो विष्णुश्च । वृषाकपाय्योः लक्ष्मीपार्वत्योः । "वृषाकपाय्यौ श्रीगौर्यौ" इत्यमरः । प्रणयागसि प्रणयापराधे सति । यदाकदाचित्संभाविते सतीत्यर्थः । मन्दानिलतः मलयपवनात् । व्यथां पीडाम् । विचिन्त्य संभाव्य । इत्थं व्यथा संपत्स्यते इत्थंकृते निवर्तिष्यत इति उत्पत्स्यमानतया परिह्रियमाणतया च विचार्येति भावः । वातन्धयानां सर्पाणां

[1] G. निरस्तचक्रे.

वल्लभं प्रियं अधिपतिमादिशेषमिति भावः । विभूषणं हारकेयूराङ्गदकटकाद्या-कल्परूपम् । तथा विभ्रमतल्पं विलासपर्यङ्करूपं च । व्यधत्त अतनुत । यथाक्रमं हरो भूषणं हरिस्तल्पं च व्यतानीदित्यर्थः । तदा पीडाकारिणं पवनं वाताशनाधीशः पास्यतीत्याशयः । इतीति शेषः । तर्कये संभावयामि । कथमन्यथा जगदानन्दसन्दायिष्वपरिमितेषु सत्सु वस्तुषु सकलभयङ्करस्य विषधरस्य परिग्रह इति भावः । अत्र शेषस्य हरेण भूषाकरणं हरिणा तल्पीकरणं प्रति च गौरीश्रीविरहावस्थासंभावितमन्दानिलकर्तृकव्यथाविचिन्तन-महेतुरेव हेतुतयोपन्यस्तमिति हेतूत्प्रेक्षा ॥ ४० ॥

अथ चन्द्रकृतां व्यथां प्रपञ्चयति षड्भिः—

**समुत्तरङ्गा दिविषत्तरङ्गिणी सनीडसंचारकरं निशाकरम् ।**
**निमज्जयेन्नीरभरे क्षणं न किं कुतोऽथवा स्यादुडुपस्य मज्जनम् ॥४१॥**

**समिति**—सम्यक् अतिशयेन उत् उन्नताः तरङ्गा ऊर्मयः यासां [यस्याः]-तादृशी । दिविषत्तरङ्गिणी स्वर्गङ्गा कर्त्री । सनीडे समीपे सम्यक् अत्यन्तं प्रतिनिश-मिति भावः । संचारं करोतीति तादृशम् । निशाकरं चन्द्रम् । नीरभरे स्वीयसलि-लोच्चये । क्षणं क्षणमात्रं वेलर्थः । न निमज्जयेत् किं निमग्नं न कुर्यात् किमु । एवं तुदन्तं चन्द्रं त्वत्समीपागतं पयसि मज्जयित्वा मारयेति स्वर्गङ्गास्माभिः प्रार्थनीया । इतोन्यद्व्यथानिवर्तनोपायं न पश्यामः । सा पुनर्गङ्गा मदीयां प्रार्थनां समर्थयेद्वा न वा । मास्तु निश्शेषतया चन्द्रमारणं किन्तु यत्किंचित्समयं वा निमज्जयित्वा तद्दर्शनेनास्मान् किं न सुखयति । मास्तु तावदपि । क्षणमात्रमपि न निमज्जयेत् किम् । येन तावद्वा मुक्तदुःखो भवेयमिति भावः । अथवा तावद्वा मत्प्रार्थनाया अकरणेऽपि गङ्गाया गगन एव नित्यनिवासेन चन्द्रस्य तत्रैव प्रतिनिशं सञ्चारे च सति कूपोपकण्ठनित्यनिषण्णशिशुन्यायेन यदा कदाचित्स्वतः पतितं वा न निमज्जयेत्किम । तदापि वा किञ्चित्सुखी स्यां इति भावः । अमुमर्थमाक्षिपति । अथवा आहोस्वित् । आशंसितमिदं कदापि न भवेदिति भावः । तदेवाह—उडुपस्य उडूनि नक्षत्राणि पातीति तस्य चन्द्रस्य । अन्यत्र उडुपस्य प्लवस्य । "उडुपं तु प्लवः कोलः" इत्यमरः । नद्यादिसन्तरणसाधनदारुमययानपात्रस्येत्यर्थः ।

मज्जनं सलिलनिमज्जनम् । कुतः स्यात् कथं भवेत् कदापि न भवेदित्यर्थः । अन्यसन्तारणस्य स्वतो मज्जनस्यासंभावितत्वादिति भावः । अत इयं मदीया प्रार्थना न फलिष्यतीति भावः । अत्र स्वेनैवाशंसितस्य प्रार्थितस्य च स्वयमेवाक्षेपादाक्षेपालङ्कारः । "आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात् ।" इति लक्षणात् । श्लेषेण सङ्करश्च ॥ ४१ ॥

**घनावलीयं क्षणमर्धमेव वा कठोरवृत्तिं क्षणदाकुटुम्बिनम् ।**
**पिधाय जायेत मम प्रियाय किं मुदेऽथ वा स्यात्किमु मेघसन्ततिः ॥**

**घनावलीति**—इयं परिदृश्यमाना । घनावली मेघमाला । कठोरा क्रूरा विरहिजनपीडयित्री वृत्तिः व्यापारो यस्य तादृशम् । अत्यन्ततापकारिणमित्यर्थः । क्षणदया कुटुम्बिनं गृहमेधिनं निशापतिमित्यर्थः । क्षणं क्षणकालमात्रं वा । अर्धमेव वा अर्धं क्षणकालं वा । पिधाय तिरोधाय । मम प्रियाय प्रीतये, चन्द्रदर्शनजनितदुःखनिवृत्तये । तादर्थ्ये चतुर्थी । स्यात् किं भवेत् किमु । क्षणमात्रं वा घनेन चन्द्रे तिरोहिते तावन्मात्रं वा निवृत्तदुःखो भवेयमिति भावः । अमुमर्थमाक्षिपति । अथवा मेघसन्ततिः घनावलिः । मे मम रुक्मिणीविरहार्तस्येति भावः । मुदे प्रीतये । स्यात् किं भवेत् किं । न भवेदेवेत्यर्थः । मेघमालायाः स्वयमेव चन्द्रादप्यत्यन्तं विरहिजनपीडयितृत्वस्वाभाव्यान्मत्कृते तिरोधानं न कुर्यादिति भावः । मुदे प्रीतये । स्यात् किं न स्यात् । व्यथाकारिणश्चन्द्रस्य तिरोधानार्थसन्निधापितस्य तस्यैव मेघस्य चन्द्रादप्यतिहृद्यत्वेन तथाविधाशंसनमेव महतेऽनर्थाय भवेदिति भावः । अत्र स्वोक्तस्यार्थस्य स्वयमाक्षेपादाक्षेपालङ्कारः । इष्टार्थोद्यमादनिष्टलाभरूपो विषमालङ्कारः ॥ ४२ ॥

**विधुं तुदंतं किरणैर्वियोगिनो विधुन्तुदो हन्त गिरन्विशृंखलम् ।**
**परोपकारप्रवणा न जिह्मगा इति प्रथां किन्नु[1] मुधा विधास्यति ॥**

**विधुमिति**—विधुन्तुदः राहुः । स्वत एव चन्द्रहिंसक इति भावः । किरणैः करैः साधनैः । वियोगिनः विरहिजनान् । तुदन्तं पीडयन्तम् । विधुं चन्द्रम् ।

[1] G. किं न.

विशृङ्खलं निरर्गलं यथातथा सर्वांशेनेति भावः । गिरन् भक्षयन् सन् । जिह्मगाः भुजगाः । "जिह्मगः पवनाशनः" इत्यमरः । जिह्मं कुटिलं यथातथा गच्छन्ति चरन्ति स्वीयसर्वकृत्यमाचरन्तीति जिह्मगा दुर्जनाश्च । न परोपकारप्रवणाः परेषामुपकारे हिताचरणे प्रवणाः प्रवृत्ताः न नभवन्तीत्यर्थः । इति एवम् । जगति निरूढां प्रथां ख्यातिम् । स्वस्य निन्दारूपामिति भावः । मुधा मिथ्याभूताम् । विधास्यति किन्नु रचयिष्यति किमु । परेषां बहूनां विरहिणामुपकाररूपे राहुणा निर्वर्तिते तस्य परोपकारित्वख्यात्या जिह्मगाः परोपकारशीला न भवन्तीति प्रथा स्वयमेव व्यपैतीत्यर्थः । स्वाभ्यवहारे मुख्यफले अनुभुज्यमाने परेषामुपकारोऽप्यनुनिष्पन्नो भवति । ततश्च जगति चिरनिरूढा भुजगत्वेन सजातीयानामुरगाणां कुटिलगन्तृतया सजातीयानां दुर्जनानां चापख्यातिश्च परिहृता भवतीति भावः । हन्तेति हर्षे । स च सर्वात्मना चन्द्रनाशे चन्द्रकृता व्यथैव कदापि न स्यादिति, राहोश्च क्षुधानिवृत्तिस्तज्जातिमात्रस्य दुरपख्यातिनिवृत्तिश्च भवतीति । "हन्त हर्षेऽनुकम्पायां वाक्यारंभविषादयोः" इत्यमरः । प्रहर्षणं नामालङ्कारः । "वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम्" इति लक्षणात् ॥ ४३ ॥

**वधूकुचाश्लेषविशेषवञ्चितो विधुन्तुदस्सामिवियोगविक्लबः ।**
**[1]वियोगिपीडैकविधाविशृङ्खलं ग्रसेत यद्वा क्षणदाधिपं कथम् ॥४४॥**

वधूकुचेति—पूर्वोक्तं राहुमुखेन चन्द्रनिग्रहरूपार्थमाक्षिपति । यद्वा आहोस्वित् । वधूकुचाश्लेषः वनितास्तनपरिरम्भ एव विशेषः सम्भोगभेदः तेन वञ्चितः विनाकृतः । अमृतपरिवेषणावसरे जगन्मोहनस्त्रीवेषधारिणा विष्णुना राहोः शिरोमात्रावशेषिततया स्तनपरिरम्भसम्भावनाया एवाभावादिति भावः । अत एव सामि अर्धांशेन । "सामि त्वर्धे जुगुप्सने" इत्यमरः । वियोगेन विरहेण विक्लबः विह्वलः । नायिकासल्लापाधरास्वादादिसम्भोगसम्भवेऽपि स्तनपरिरम्भादीनामभावेन अलब्धविरहावश्यम्भावेनार्धवियोगानपायादिति भावः । विधुन्तुदः राहुः । वियोगिनां विरहिणां सामान्यतो विरहिजनमात्रस्येत्यर्थः । पीडाया व्यथाया एकस्या मुख्यभूतायाः केवलाया वा स्वात्मकृत्यत्वेन प्रसिद्धाया इति भावः । विधायां

[1] A. वियोगिबाधैक·

प्रकारे विधाने वा विश्रृङ्खलः निरर्गलं [लः तम्] स्वानुष्ठितप्रतिविधायिप्रत्यर्थिरहितमित्यर्थः। क्षणदाधिपं चन्द्रम्। कथं ग्रसेत भक्षयेत्। न ग्रसेतैवेत्यर्थः। "गृ निगरणे" इति धातोरात्मनेपदे लिङ्। राहोरप्युक्तविधया विरहिकोटिप्रविष्टतया चन्द्रेणैवनिग्राह्यत्वावश्यम्भावे पूर्वोक्ता मदीयाशंसा न भवेदिति भावः। पूर्वोत्तरयोरनयोरेकवाक्येनाक्षेपालङ्कारः॥ ४४॥

**जगत्प्रभोरेष जटाटवीधुने र्ललाटवह्नेश्च चमूरुलाञ्छनः।**
**अधीत्य शीतोष्णकृतौ कृती कुले व्यनक्ति ते युक्तवियुक्तवर्गयोः॥**

**जगदिति**—शीतं च उष्णं च शीतोष्णे तयोः कृतौ करणे विषये। कृती कुशलः। अत्यन्तशिशिरीकरणातितापकरणयोर्विचक्षण इत्यर्थः। जगच्छीतीकरणविरहिसन्तापनयोः दृष्टचरत्वादिति भावः। एष चमूरुलाञ्छनः एष चन्द्रः। जगत्प्रभोः परमेश्वरस्य। नित्यनिवासस्थानीभूतमस्तकस्येति भावः। जटाटवीधुनेः जटाजूटनिबद्धाया गङ्गायाः सकाशात्। ललाटवह्नेः नेत्राग्नेश्च सकाशात्। अधीत्य अभ्यस्य। प्रकरणात् शीतोष्णे इत्यर्थः। सन्ततसन्निहितयोः गङ्गानेत्रानलयोरन्तेवासीभूय शीतोष्णरूपे विद्ये परिगृह्येति भावः। ते शीतोष्णे। क्रमेण युक्तयोः मिलितयोः वियुक्तयोः विरहिणोश्च वर्गयोः स्त्रीपुंसबृन्दयोरित्यर्थः। कुलेऽस्य रतये यद्वा युक्तानां वियुक्तानां च वर्गयोः युक्तवर्गे शीतमयुक्तवर्गे तापं चेत्यर्थः। व्यनक्ति प्रकाशयति। विपूर्वात् "अञ्जू व्यक्तिम्लक्षणकान्तिगतिषु" इति धातोः लट्। अत्र चन्द्रेण युक्तवियुक्तवर्गविनियोजितशीतोष्णाधिगमं प्रति शिवशिरःस्थिताया गङ्गायाः फाललोचनादध्ययनमहेतुरेव हेतुतया ल्यबा निर्दिष्टमिति हेतूत्प्रेक्षा व्यञ्जकाभावात् गम्या, यथासंख्येन संसृष्टिः॥ ४५॥

**नमो महिम्ने नटते दिनावधौ वियुक्तलीलावियुतोऽपि यः पुरा।**
**जटाटवीझाटकुटीकुटुङ्गभूकुटुम्बिनीन्दौ कुशली समेधते॥ ४६॥**

**नम इति**—दिनावधौ प्रदोषसमये। नटते नृत्यते आनन्दनटनमाचरते। तेन शिवस्य नित्यानन्दनिर्भरत्वं व्यज्यते। महिम्ने भूम्ने महेश्वराय। नमः प्रह्वोऽस्मीत्यर्थः। "नमःस्वस्ति" इत्यादिना चतुर्थी। महिम्न इत्यनेन निरतिशयधैर्यातिशय-

शालित्वं दुस्सहव्यथासहनत्वमित्यादिमहामहिमत्वमुच्यते। तदेवोपपादयति। यः परमेश्वरः। पुरा पार्वतीविरहावस्थायाम्। वियुक्तानां विरहिणां लीलया विलासेन विरहज्वरपरिप्लोषणादिव्यापारेण वियुतोपि विशेषेण युक्तोपि सन्। विरहावस्था-सम्भावितोद्दीपनविभावाद्यविकलोऽपीत्यर्थः। इन्दौ चन्द्रे। द्विलक्षयोजनान्तराळ-वृत्तित्वेपि विरहिजनप्राणहारिणीति भावः। जटाटव्याः सटापटलस्य झाटस्य जूटस्य परस्परपर्यायपरिवर्तितोन्नतपेटकाकारजटाकलापस्येत्यर्थः। कुब्याः कुञ्जस्य, यद्वा जटाटवीझाटात्मिकायाः कुब्या इत्यर्थः। कुटुङ्गभुवि पटलप्रान्तदेशे कुटुम्बिनि संसारिणि सति। तत्रैव निरन्तरनिवासशील इति भावः। कुशली क्षेमेण युक्तस्सन्। अविकल एव सन्निति भावः। समेधते सम्यग्वर्धते। "एध वृद्धौ" इति धातोर्वर्तमाने लट्। अनेकलक्षयोजनान्तरालवर्तनेऽपि मादृशामीदृशी व्यथा दृष्टा, न धुर्ये सन्ततं स्वकीयमकुटतटावस्थितेप्यविकलोद्यापि जीवति। अविकलो वर्धमानश्चेति अहो तस्य महिमातिशयः। अतस्तस्मै भूयोभूयो नमस्ये इति भावः। अत्रात्यन्ततापसाधनीभूते चन्द्रे सन्निहितेऽपि तदनुत्पत्तिप्रतीत्या विशेषोक्ति-रलङ्कारः। वृत्त्यनुप्रासेन संसृष्टिः। "कार्याजनिर्विशेषोक्तिस्सति पुष्कलकारणे" इति लक्षणात्॥ ४६॥

अथ कविः सर्गान्तपर्यन्तैः पद्यैः इन्दुमदनमन्दपवनोपालंभं कविनिबद्ध-वक्तृप्रौढोक्त्या कृष्णमुखेन वर्णयिष्यन्नवतारयति—

**अनन्तरं सन्ततदन्तुरीभवद्दुरन्तसन्तापनिरन्तरान्तरः।**
**अमन्ददर्पावयमिन्दुदर्पकौ निनिन्द मन्दं मरुतं च नन्दभूः॥४७॥**

**अनन्तरमिति**—अनन्तरं पूर्वोक्तविधया स्वापकारिचन्द्रादीनामनामन्त्रणे-नैव स्वयं तत्कृतव्यथाप्रतिपादनानन्तरमित्यर्थः। अयं नन्दभूः नन्दगोपसूनुः कृष्णः। सन्ततं अविरतं दन्तुरीभवता निबिडीभूतेन निरन्तरप्रवृत्तेनेत्यर्थः। दुरन्तेन अपरिहार्येण सन्तापेन विरहज्वरेण इन्दुमदनमन्दपवनसन्धुक्षितेनेति भावः। निरन्तरं निबिडं आन्तरं हृदयं यस्य तादृशस्सन्। अमन्दः अनल्पः दर्पो गर्वः ययोस्तादृशौ। इन्दुदर्पकौ चन्द्रमदनौ। मन्दं मरुतं मलयपवनं च। निनिन्द व्यगर्हयत्। प्रत्येकसंबोधनपूर्वकमधिचिक्षेपेत्यर्थः। अत्र त्रयाणां निन्द्यत्वाविशेषेपि

अमन्ददर्पाविति मारुतपरित्यागेन चन्द्रमदनयोः केवलं दर्पकथनं चेतनत्वाभिप्रायेणेति मन्तव्यम्। वृत्त्यनुप्रासोऽलङ्कारः ॥ ४७ ॥

अथाष्टभिः पद्यैः चन्द्रोपालम्भमाह—

**स कालकूटोऽसि शशिन्न चेत्कथं समुल्लसेन्मोहनशक्तिरीदृशी ।**
**भवन्तमाकारविलेखनभ्रमात् प्रजाः कलाकूटतया प्रचक्षते ॥ ४८ ॥**

**स इति**—हे शशिन् चन्द्र। त्वमिति शेषः। स त्वं विरहिजनसम्मोहकत्वेन प्रसिद्ध इत्यर्थः। कालकूटः कालकूटाख्यविषस्वरूपः। असि भवसि। न चेत् तथा न भवसि यदि। ईदृशी एवमनिर्वचनीया। मोहने विरहिजनविवशीकरणे विषये शक्तिः सामर्थ्यविशेषः। तवेति शेषः। कथं किमिति। समुल्लसेत् संभवेत्। लसतेः कर्तरि लिङ्। महाविषं कालकूटमन्तरा एवं मोहकत्वं क्वापि न दृष्टचरं नापि श्रुतचरमित्यर्थः। तर्हि तथा कुतो न लोका व्यवहरन्तीत्यतो लोकव्यवहारमप्युपपादयति। प्रजाः प्राणिनः। भवन्तं त्वाम्। आकारस्य भवदीयनामावयवीभूतस्य कालकूट इति ककारोत्तरलेखनीयस्य आकारस्य विलेखने तथैव विन्यसने विषये भ्रमात् विपर्ययात्। कलाकूट इति लकारोत्तरलेखनीयतया भ्रान्त्या एकव्यंजनोपरि लेखनीयस्यान्यत्र लेखने तदुपरितनस्यापि व्यत्ययलेखनमर्थतः सिध्यतीति भावः। कलाकूटतया कलाकूटशब्दप्रतिपाद्यतया। प्रचक्षते व्यवहरन्ति। इत्थं च कालकूट इति व्यवहर्तव्ये वर्णविन्यासस्थानव्यत्ययेन भ्रमात् पाठेऽपि कालकूटविषत्वेन व्यवहारस्य पृषोदरादित्वात् साधुत्वे संभवति सति केचन कलानां षोडशांशानां कूटः समुदाय इति व्युत्पत्तिमाश्रित्य तस्यैव कलाकूट इति व्यवहारस्यार्थान्तरं परिकल्पयन्ति। तेऽपि खलु व्यावहारिकशब्दोत्पत्तिमूलमपरिज्ञाय स्थितगतिकल्पका भ्रान्ता एवेति भावः। अत्र जगन्मोहनशक्तिमत्त्वेन हेतुना यदि त्वं कालकूटो न स्यास्तर्हीत्थं जगन्मोहनशक्तिमानपि न स्या इति अनुकूलतर्कसहकृतेनानुमानेन लब्धात्मनः कालकूटत्वस्य कालकूटशब्दस्यार्थान्तरगर्भतारूपछेकोक्तिरूपेण समर्थनमिति सङ्करः। "छेकोक्तिर्यत्र लोकोक्तेः स्यादर्थान्तरगर्भता" इति लक्षणात् ॥ ४८ ॥

**अहो भवानन्तरशान्तपावकं हराक्षिदग्धस्मरभस्ममण्डलम् ।**
**दहन्ति हा हन्त मरुद्धुता विधो कराङ्कुराकारभृतः[1] कणा यतः ॥**

**अहो इति**—हे विधो चन्द्र । भवान् त्वम् । अन्तः मध्यदेशे । अशान्तः अप्रशमितः पावकः वह्निर्यस्मिन् तादृशम् । क्रमात् भस्मीभवने अन्तः सर्वात्मना भस्मीभावमनापत्तेर्भस्माकारैरपि किञ्चित् सारावशेषेणाशान्तानलावयवोपेतमिति भावः । हरस्य शिवस्याक्ष्णा ललाटनेत्रेण दग्धस्य स्मरस्य भस्मनां भसितानां मण्डलं राशिः । न पुनस्तद्व्यतिरेकेण चन्द्र इति कश्चिदस्तीति भावः । अत्र हेतुमाह—यतः यस्माद्धेतोः । मरुता वायुना धुताः कम्पिताः । आनीता इति यावत् । कणाः वह्निकणाः । कराङ्कुराः चन्द्रस्य किरणप्ररोहा इति आकारं स्वरूपं बिभ्रतीति तादृशाः सन्तः । कराङ्कुराः इति विवेचकलोकगृह्यमाणा उक्तभस्मनामेवाकाराः न पुनश्चन्द्रकिरणा इति किञ्चित्परमस्तीति भावः । दहन्ति तपन्ति । विरहिण इति भावः । हा हन्त महत्कष्टमित्यर्थः । हराक्षिवह्निदाहेन स्वरूपनाशं प्राप्य भस्मावशेषितस्यापि मदनस्याद्यापि विरहिसन्तापनदौश्शील्यव्यपगमाभावेन विरहिणां दुःखनिवृत्तिर्न कदापि इति भावः । यद्वा हा हन्त महदाश्चर्यमित्यर्थः । बहोः कालाद्दह्यमानस्यापि मदनस्याद्यापि सर्वात्मना भस्मीभावाभावे तद्देहस्य कियती सारवत्ता यदद्यापि सारावशेषादग्निमत्ता । भस्मावयवस्य लक्षद्वितययोजनान्तरं वातोद्धूतानामपि भस्मकणानामनलानपगम इति महदिदमद्भुतमिति भावः । अत्र चन्द्रकिरणाङ्कुरेषु तथात्वमपह्नुत्यारोपितेन मरुदुद्धूतसाग्निकभसितकणगणेन हेतुना तदुद्भवस्थानभूतस्य चन्द्रमण्डलस्य हरनयनानलदग्धमदनाङ्गभस्ममण्डलत्वस्य साधनादनुमानालङ्कारः । स च कराङ्कुरेष्वसत्यत्वपर्यवसायाकारपदाधिगतापह्नवगर्भित इति सङ्करः ॥ ४९ ॥

**सगर्भ्यता नो शशलाञ्छन त्वया विषानिमेषाशनयोर्विशिष्यते ।**
**तथापि चाद्यानुकृतिं[2] करोषि किं न जन्मवक्रा मलिनानुवर्तिनः ॥**

[1] G. हृतः

[2] G. स्तिम्.

**सगर्भ्येतेति**—हे शशलाञ्छन इन्दो । विषानिमेषाशनयोः कालकूटामृतयोः । त्वया भवता सह । सगर्भ्यता सहजता सहोदरत्वमित्यर्थः । "सगर्भ्यसहजास्समाः" इत्यमरः । नो विशिष्यते न विशेषितो भवति । सर्वेषां सागरोत्पन्नत्वाविशेषेण विषे यादृशी सगर्भ्यता तादृश्येवामृतेऽपीति तुल्यैवेत्यर्थः । तथापि अनुबन्धसाम्येऽपि । अनुबन्धनिमित्तकतया कस्यचित् गुणानुकरणे भवितव्ये सकललोकानन्दकस्यामृतस्यानुकरणे मुख्यतया संभाविते सत्यपीति भावः । आद्यस्य विषस्य अनुकृतिं अनुकरणम् । किं करोषि कुतः कुरुषे । नैतत्सांप्रतमिति भावः । अमुमर्थं सामान्येन समर्थयति । जन्मना उत्पत्त्या जननावसर एवेत्यर्थः । वक्राः कुटिलाः वक्राकाराः दुर्जनाश्च । मलिनानुवर्तिनः मालिनान् मलीमसान् नीलवर्णान् पापिनश्च अनुवर्तन्ते अनुसरन्तीति तादृशाः । नेति काकुः । भवन्तीति शेषः । काका न भवन्ति किं भवन्त्येवेत्यर्थः । अतस्तवापि उत्पत्तिकाले एकद्वित्रिकलात्मतायां कुटिलाकारतया तादृशस्य तत्त्वातीतमलीमसक्रूरकालकूटगुणानुकरणं युज्यत एवेति उत्पत्तिसमनन्तरमेव भगवता भूषाकृतस्य वक्राकरत्वमस्योत्पत्तौ . . . . . . । अत्र सोदरयोर्द्वयोः सतोरेकमात्रानुकरणरूपस्य चन्द्रकृतस्य विशेषस्य न जन्मवक्रेत्यादि सामान्येन समर्थनादर्थान्तरन्यासः । श्लेषानुप्राणित इति सङ्करः ॥ ५० ॥

**सुधेन्दिरास्वस्तरुकौस्तुभादिकं परस्सहस्रं सृजतात्पयोनिधिः[1] ।**
**तथापि दोषाकर दुर्यशो निजं न मार्ष्टुमीष्टे[2] भवदीयसृष्टिजम् ॥५१॥**

**सुधेति**—हे दोषाकर निशाकर । दोषाणां विरहिहिंसादिरूपाणां पापानामाकर । पयोनिधिः क्षीरसागरः त्वदुत्पादक इति भावः । सुधा अमृतं इन्दिरा लक्ष्मीः स्वस्तरवः मन्दारादयो देवतरवः कौस्तुभो विष्णूपगृहीतो मणिविशेषश्च इमानि आदीनि यस्य तादृशम् । सामान्ये नपुंसकं जातावेकवचनम् । ईदृशं सकललोकोपकारकं वस्तुजातमिति भावः । आदिपदात् चिन्तामणिसुरभ्यादयो गृह्यन्ते । परस्सहस्रं सहस्रसंख्यातीतम् । "परश्शताद्यास्ते येषां परा

[1] G. प्रजापतिः

[2] G. न तत्प्रमार्ष्टुमीष्टे.

संख्या शताधिका'' इत्यमरः। सृजतात् उत्पादयतु। लोकहिंसकस्य तवोत्पादनसमुद्भूतां दुष्कीर्तिं परिहर्तुं सकललोकोपकरणधुरन्धराणि सहस्राधिकानि भूयोभूयः कामं जनयत्वित्यर्थः। तथापि तथाकृतेऽपीत्यर्थः। भवदीयसृष्टिजं त्वदुत्पादनजनितं निजं स्वकीयम्। पूर्वमेव निखिलजगत्प्रसिद्धमिति भावः। दुर्यशः दुष्कीर्तिम्। मार्ष्टुं निराकर्तुम्। नेष्टे न शक्नोति। ''एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः'' इति न्यायेन दुर्यशोनिवारणप्रत्याशायामपि तादृशन्यायस्याल्पदोषमात्रविषयत्वेन दोषस्य बलवत्तरत्वे तु ''स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्'' इति न्यायस्यैवावतारादीदृशापकीर्तिः कदापि न व्यपैतीति भावः। अत्र पयोनिधिकृतं सुधाद्युत्पादनं प्रति तत्पूर्वकृतचन्द्रोत्पादनप्रयुक्तदुर्यशोमार्जनं फलतया संभावितमिति फलोत्प्रेक्षा व्यङ्ग्या। अयशोमार्जनसाधने सुधोर्मिजगदानन्दनबहुतरवस्तूत्पादने सत्यपि फलीभूतायशोमार्जनानिष्पत्तिवर्णनात् विशेषोक्तिः। दोषाकरेति सम्बुद्धेः जनयितुरयशस्संपादनसमर्थत्वाभिप्रायगर्भस्य सन्निवेशात् परिकराङ्कुरश्च श्लेषसङ्कीर्णः॥ ९१॥

**तुषानलभ्रान्तिकरैः करोत्करैः तुषारभानो [1]तुदसि प्रसीद मे।**
**तदास्यदास्यं तव दापयाम्यहं तया युतश्चेत्सुकृतैः पुराकृतैः॥५२॥**

तुषानलेति—हे तुषारभानो हिमांशो। विरोधिनोऽपि साम्ना समावर्जनं हिममयकिरणवत्त्वेन सम्बोधनम्। अथवा यथा तुषाराणामतिशीतलत्वे प्रत्यक्षसिद्धेऽपि कमलिनीसमूलदहनवत् शीतकरणत्वप्रसिद्धावपि तथैव तव विरहिसन्तापकत्वमित्यभिप्रायकं सम्बोधनम्। तुषानला इति तुषाग्नय इति अन्ये त्वदुद्भूतानलवर्ष इत्यर्थः। भ्रान्तिं भ्रमं कुर्वन्तीति तादृशैः। तुषाग्नेरतितापहेतुत्वप्रसिद्धेरिति भावः। यद्वा तापकारित्वातिरेकेण सूक्ष्मत्वधवलत्वसर्वतःप्रसृतत्वादिधर्मान्तरैरपि साधर्म्यसत्वात्तुषाग्निगवेषणमिति मन्तव्यम्। करोत्करैः किरणजालैः। ''उत्करः कूटमस्त्रियाम्'' इत्यमरः। तुदसि व्यथयसि। हिंसार्थकात् ''तुद व्यथने'' इति धातोर्लट्। मे मह्यम्। प्रसीद दयस्व। अथ निर्दयत्वपरिज्ञानेन

[1] G. न तुद.

सान्त्ववादमात्रं अनलं मन्वानो दानेन द्वितीयोपायेनावर्जयति। अहं ईदृश-गुणविशिष्ट इत्यर्थः। रुक्मिणीहृदयानन्दनगुणबृन्दवानिति भावः। तेन वक्ष्यमाणरुक्मिणीसमागमस्यासन्दिग्धत्वमनुपदभावित्वं च व्यज्यते। पुरा पूर्वजन्मनीत्यर्थः। तेनैकस्मिन् जन्मनि कर्तुमशक्यत्वं तेन चापरिमेयत्वं च सुकृतानां व्यज्यते। सुकृतैः पुण्यैः। "पुण्यश्रेयसी सुकृतं वृषः" इत्यमरः। तया रुक्मिण्या। युतश्चेन्मिलितो यदि। तदेति शेषः। तत्काल एवेत्यर्थः। तव ते तुभ्यमिति यावत्। तदास्यस्य रुक्मिणीवदनस्य दास्यं दासभावम्। निरूपितत्वं षष्ठ्यर्थः। दासत्वकथनेन स्वामित्वमाक्षिप्यते। ततश्च रुक्मिणीवदननिष्ठस्वामित्व-निरूपितदास्यत्वरूपमनितरसुलभं महाधिकारमिति भावः। दापयामि रुक्मिणी-मुद्बोध्य तन्मुखेन समर्पयामीत्यर्थः। तल्लाभस्य शैघ्र्यप्रत्यायनार्थः "वर्तमान-सामीप्ये वर्तमानवद्वा" इति भविष्यदर्थेऽपि लटः प्रयोगः। रुक्मिणीवदनस्य त्वत्तोऽत्यन्तातिशयितप्रभाप्रभाववत्तया तद्दासभावेऽप्ययोग्यस्य तव मन्मुखेन तदास्यदास्याधिगमस्य परमलाभतया तत्संपादयतो ममानुवर्तनं तवावश्यकमिति भावः। भ्रान्तिमान् वृत्त्यनुप्रासश्चालङ्कारः॥ ९२॥

अथेदानीं दानेनावर्जनमप्यशक्यं मन्वानस्तृतीयोपाये भेदे प्रयोजयितव्ये भेदनीयस्य प्रतिपक्षस्य एकव्यक्तिरूपतया परस्परविद्वेषजननरूपस्य भेदस्या-संभाविततया प्रकृते प्रलोभनमेव भेदं मन्वान आह—

**कुतो विरोधं कुरुषे वृथा विधो श्रियोऽनुजः स्यालतयासि सम्मतः।**
**भजानुकम्पां भवता विनापरः समीक्ष्यते नो सहजापतिं द्विषन्॥**

**कुत इति**—हे विधो चन्द्र। कुतः कस्मात्प्रयोजनात्। विरोधं विद्वेषम्। मयेति शेषः। कुरुषे करोषि। न किञ्चित्प्रयोजनमुपलभ्यत इति भावः। वृथा निष्फलं मद्विरोधकरणमयुक्तमित्यर्थः। भवद्विदितं विरोधनिमित्तं यत्किञ्चित् स्यादित्य-तस्तत्संभावनैव नास्तीत्याह। श्रियः लक्ष्म्याः। अनुजः भ्राता। त्वमिति शेषः। अतः स्यालतया गृहिणीसोदरत्वेन। ममेति शेषः। सम्मतः विश्वसनीयः। मम प्रेमपात्रमिति भावः। असि भवसि। अतो विरोधसंभावनैव नास्तीति भावः। अत इति शेषः। अनुकम्पां कृपाम्। भज सेवस्व प्राप्नुहीत्यर्थः। "भज सेवायाम्"

इति धातोर्लोट् ॥ त्वयि मया प्रीतिकरणे मय्यपि त्वया प्रीतिविधानमावश्यकमिति भावः। नैवं चेल्लोकविरुद्धो भवसीत्याह—भवता विना त्वामन्तरेण। अपरः त्वदन्यः। सहजायाः सोदर्याः पतिं भावुकम्। द्विषन् सन् द्रुह्यन् सन्। नो समीक्ष्यते न दृश्यते। केनापीत्यर्थः। भवदन्यो भगिनीपतिद्वेषी दृष्टःश्रुतश्च न भवतीति भावः। द्विषन् न समीक्ष्यत इति द्वेषाभावस्य वर्तमानत्वप्रतीत्या सकललोकविरुद्ध ईदृशो द्वेषः यत्र क्वचन प्रत्यक्षदृष्ट एव पारमार्थिकतयाभ्युपेयो न पुनः प्रमाणान्तरेण केनाप्यवगत इति व्यापकः। अतस्सर्वमिदमालोच्य विरोधमुन्मुच्यानुकूलो भवेत्यर्थः। अत्र कुत इति कर्तव्ये कर्मणि प्रथमं प्रयोजनविचारः कार्य इति, वृथेति निष्फलं कर्म नानुष्ठेयमिति, श्रियोऽनुज इति बन्धूपलालनं तद्विरोधाभावश्च कार्य इति, सम्मत इति विश्वस्तद्रोहो न कार्य इति, भजानुकम्पामिति प्रार्थनाभङ्गो न कार्य इति, सहजापतिं द्विषन्न समीक्ष्यत इति लोकानुकरणं कार्यं तद्विरोधश्च न कार्यः, इत्येवमादिनीतिप्रदर्शनरूपं प्रलोभनं कृतमिति ध्येयम्। कुत इत्याक्षेपाद्विधेयस्य विरोधाभावस्य श्रियोनुज इत्यादि वाक्यार्थेन समर्थनात् बहुवाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ९२ ॥

एवं भेदेनाप्यनुकूलीकरणमशक्यं निश्चित्य त्रिभिरुपायैरसाधनीयस्य चतुर्थेन दण्डेनैव निर्वाह्यतया तत्र च कायिकस्यार्थकृतस्य च प्रकृतदण्डस्यासंभवात् तदीयमहापातकोद्घाटनेन निन्दारूपं धिग्दण्डं पातयति द्वाभ्यां कुळकेन—

**विधो सुराहारतयासि विश्रुतस्तथा समुद्यद्गुरुदाररागभाक्।**
**निशासु हन्तास्ययुतद्विजावलेश्चिराय हैमीं श्रियमाहरस्यपि ॥**

**विधो इति**—हे विधो त्वमिति शेषः। त्वं सुराणां देवानां आहारतया अभ्यवहार्यतया। विश्रुतः प्रसिद्धः विशेषेण श्रुतिप्रतिपादितो वा। "प्रथमां पिबते वह्निः" इत्यादिश्रुतेः। अन्यत्र सुरा हाला आहारो अभ्यवहार्य यस्य तादृशः। अत्रापेयत्वमुक्त्वा आहारत्वकथनं सुरापत्वमहापातकस्य चिरकालं बुद्धिपूर्वकृतत्वप्रत्यायनार्थम्। तस्य भावस्तत्ता तया सुरापायित्वधर्मवत्तया। विश्रुतः प्रसिद्धः असि। अपीति प्रश्नार्थकं प्रतिवाक्यमन्वेति अप्यसि भवसि नन्वित्यर्थः। तेन सर्वोऽप्ययं दोषस्त्वदभ्युपगमनीय एव नापलापार्ह इति व्यज्यते। अतस्साक्षि-

भावनमपि नापेक्षितमिति गम्यते। तथा तद्वदेव सम्यक् उद्यन्तं विभावानुभावसात्विकादिसमुल्लसितं गुरोराङ्गिरसस्य दारेषु कलत्रे तारायां विषये रागं रतिरूपं स्थायीभावं परिपूर्णसंभोगशृंगारं भजतीति तादृशः। अप्यसीत्यनुषज्यते। गुरुतल्पगमनमहापातकी किं न भवसीत्यर्थः। तथा निशासु रात्रिषु। अयुक्तानां विरहिणां द्विजानां पक्षिणां चक्रवाकानामिति भावः। "दन्तविप्राण्डजा द्विजाः" इत्यमरः। आवलेः समूहस्य। हन्ता संहर्ता। रात्रिविरहार्तचक्रवाकसन्तापकृदिति भावः। अन्यत्र अयुतानां दशसहस्रसंख्याकानां द्विजानां ब्राह्मणानां आवलेः समूहस्य। हन्ता संहर्ता। असि भवसि। अपीत्यप्यनुषज्यते। उक्तोऽर्थः। अनेकसहस्रब्रह्महत्यामहापातकीत्यर्थः। तथा चिराय कालक्रमेण। अस्तमयावसरे वा सायंसमय इत्यर्थः। हैमीं हेमसम्बन्धिनीं सुवर्णसदृशीमिति यावत्। श्रियं शोभाम्। आहरसि अपहरसि सुवर्णशोभां वहसीत्यर्थः। अन्यत्र चिराय बहोः कालात्। हैमीं हेममयीम्। श्रियं संपदम्। आहरसि अपहरसि मुष्णासीत्यर्थः। अतः स्वर्णस्तेयाख्यमहापातकीति भावः॥ ९४॥

**सदैव सख्यं मधुपावलीगुणस्पृशा विधत्से स्पृहयाङ्गजन्मना।**
**अहो महापातकपञ्चकाञ्चिते कुतो बतोदेति [1]कृपा तथा त्वयि॥५५॥**

**सदेति**—मधुपानां भृङ्गाणां "मधुलिण्मधुपालिनः" इत्यमरः। आवलीमेव पङ्क्तिमेव गुणं मौर्वीं स्पृशतीति तादृशेन। भृङ्गाणां मदनधनुःशिञ्जिनीत्वेन तत्संस्पर्शावश्यंभाव इति भावः। अन्यत्र मधुपानां मद्यपायिनां आवलेः गुणं शीलं सदा मद्यसेवनरूपं स्पृशति अवलम्बत इति तादृशेन। सदा मधुपायिनेत्यर्थः। अङ्गजन्मना मदनेन। अन्यत्र पुत्रेण। यद्वा अङ्गेत्यामन्त्रणे। जन्मना उत्पत्त्या जननादारभ्येति यावत्। मधुपावलीगुणस्पृशा तादृशेन जनेनेत्यर्थः। सदा अनवरतम्। स्पृहया लिप्सया। न पुनः कदाचित् नापि प्रमादादित्यर्थः। सख्यं सौहृदं संसर्गं च। विधत्से विशेषतः कुरुषे। चन्द्रमदनसौहार्दस्य प्रसिद्धत्वादिति भावः। बुद्धिकृतत्वचिरपरिशीलितत्वोक्त्या प्रायश्चित्तानपनोद्यत्वं व्यज्यते। अतः एवं एकैकजातीयानां पञ्चानां मेलनादित्यर्थः। महापातकपञ्चकाञ्चिते पूर्वोक्तविधया

[1] कृपाऽथवा.

पञ्चविधानामप्याश्रयभूते। त्वयि भवति। कृपा अनुकंपा। कुतः कस्मात्। उदेति उद्भवति। नोदेत्येवेत्यर्थः। बतेति कष्टे। अल्पपापिनो निर्घृणत्वमनपायि एवं। सर्वपातकवति किमु वक्तव्यमिति महत्कष्टमिति भावः। महापातकसंघातेन कृपानुदयस्य कैमुत्येन सिद्ध्या अर्थापत्तिरलंकारः "कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते" इति लक्षणात्॥ ९९॥

अथ नवभिः पद्यैः मदनोपालंभमुपवर्णयिष्यन्नादौ प्रसङ्गात्तदवतारयति—

**कुतः स्मरप्रेष्यमुपालभे विधुं प्रहर्तुरागः परिघः करोतु किम्।**
**हरस्य तस्मिन्नयनानले हुते शिरस्स्थितोऽप्येष करोति किं पुरा॥५६॥**

कुत इति—स्मरस्य मदनस्य प्रेष्यमाज्ञाविधेयं भृत्यमित्यर्थः। तेन तत्कृतायामपि हिंसायां स्वतः तस्यानपराधित्वं व्यज्यते। विधुं चन्द्रम। कुतः कस्माद्धेतोः। उपालभे निन्दामि। उपपूर्वादाङ्पूर्वाच्च लभतेर्लट्। चन्द्रनिन्दायां न किञ्चित् कारणम्। तस्य मन्मथप्रेष्यतयैवास्मद्द्रोहकारित्वं न पुनः स्वत एवेति भावः। अमुमर्थं अन्यत्र दृष्टान्तयति। आगः अपराधः। तत्प्रयुक्तशिक्षापर्यन्तार्थः। दुष्कर्मकारिणि राजादिना प्रयुक्तो दण्ड इत्यर्थः। स तु प्रहर्तुः प्रहारकर्तुः। प्रहाररूपापकारं प्रति साक्षान्मुख्यकारणीभूत एव प्रयोज्यो न तत्साधनीभूतदण्डादाविति भावः। परिघः परिघायुधः। पुरुषप्रयोज्यः स्वयमस्वतन्त्रः। किं करोतु किं विधत्ताम्। प्रहारनिर्वर्तकं कर्म किं कुर्यादित्यर्थः। परिघाद्यभावेऽपि प्रहरणान्तरेण प्रहर्तुं शक्यत्वादिति भावः। यद्वा प्रहारकर्तुः आग इति द्वितीयान्तं प्रहर्तृकृतमपराधे विषये प्रयुज्यमानप्रहारविरचनरूपं दोषं परिघः किं कुर्यात् कथं समाधत्ताम्। अतः परिघो न दण्डयस्तद्वदयमपीन्दुर्न निन्द्य इति भावः॥

ननु भवदुक्तवैपरीत्येन चन्द्र एव मुख्यः प्रहर्ता मदनः पुनः सकृत्प्रेष्य इत्येव किं न स्यादित्याक्षेपं स्वतः चन्द्रस्यासमर्थत्वं कार्यमुखेन दर्शयति। तस्मिन् मदने। हरस्य शिवस्य। नयनानले नेत्राग्नौ। हुते दग्धे सतीत्यर्थः। एषः चन्द्रः। शिरस्स्थितोऽपि अर्थात् शिवस्येत्यर्थः। मदनदहनसाधननयनसविधवर्ती सन्नपीति भावः। किं मदनोज्जीवनसाधनं कीदृशं कर्म। करोति पुरा किमकरोत्। "यावत्पुरा निपातयोर्लट्" इति पुराशब्दयोगाल्लट्। तेन स्वीयामृतेन नयनानल-

मुपशाम्य मदनरक्षणं किं नाकरोदिति भावः। अथवा शिरःस्थितः मूर्धन्येव सम्बद्धः न पुनरस्मदादीनामिव द्विलक्षयोजनान्तरालवर्ती सः तेन तथा सम्बद्धोपि पार्वतीविरहावस्थायां अस्मत्तोप्यत्यन्तातिशयितां बाधां वा किमिति नोत्पादयेत्। मदनं वा किमिति नोज्जीवयेत् स्वतन्त्रो यदीति भावः। यद्वा शिरःस्थितः शिवेन शिरसोपलालित इत्यर्थः। शिवस्यात्यन्ताभ्यन्तरीभूत इति व्यज्यते। अतः शिवप्रसादं संपाद्य कुतो मदनं नोज्जीवयेदिति भावः। यत एवं नाकरोदतोयमस्वतन्त्रोऽशक्तश्च यथोक्तस्यामिकर्म[कुर्व]न्नोपालंभार्ह इति समर्थितं भवति। अत्र कुत इति प्रहर्तुरिति वाक्यद्वये स्मरचन्द्रयोः प्रहर्तृपरिघयोश्च सापराधत्वनिरपराधत्वयोः सामान्ययोर्भिन्नपदप्रतिपादितत्वेन प्रतिवस्तूपमालङ्कारः। तस्य चार्थस्य हरस्येति वाक्यार्थेन समर्थनात् काव्यलिङ्गम् ॥ ५६ ॥

अथ नवभिः मन्मथोपालम्भमाह—

**स्मरोऽसि कन्दर्प[1]वियोगिघस्मरो न [2]भीमसेनोऽजनि भीमनामकः।**
**वियोगिनां दर्पहरश्च दर्पकोऽस्यमा न दर्शः किमदर्शनाद्विधोः ॥५७॥**

स्मर इति—हे कन्दर्प मदन त्वमिति शेषः। वियोगिनां विरहिणां घस्मरः भक्षकः हिंसक इत्यर्थः। "भक्षको घस्मरोऽद्मर" इत्यमरः। तादृशस्सन्। स्मरः स्मर इति व्यवहर्तव्यः। असि भवसि। "नामैकदेशे नामग्रहणम्" इति व्यवह्रियसे। न पुनः स्मर इत्येव ते नामेति भावः। अमुमर्थं दृष्टान्तेन साधयति—भीमसेनः भीमसेननामा पाण्डवः। द्वितीयः भीमसेननामकः भीमशब्दप्रतिपाद्यः। नाजनि नाजनिष्ट। काकुः नाजनिष्ट किमजन्येवेत्यर्थः। तथा वियोगिनां विरहिणाम्। दर्पहरः दर्पनाशकस्सन्। दर्पकश्च दर्पकशब्दप्रतिपाद्यश्च। असि भवसि। न पुनर्दर्पयतीत्यर्थे दर्पक इति ते नामेति भावः। अमुमर्थं दृष्टान्तेन साधयति—अमा अमावास्या। विधोश्चन्द्रस्य। अदर्शनात् सूर्यमण्डलान्तर्गतत्वेनापरिज्ञानादेवेत्यर्थः। दर्शः दर्शप्रतिपाद्यः। नाजनि काका नाजनि किं नाजनिष्ट किमित्यर्थः। अजन्येवेति। न पुनर्दृश्यतेस्मिन् समये चन्द्र इति व्युत्पत्त्या वस्तुतश्चन्द्रस्यैवादर्शनादिति भावः। स्मर इति दर्पक इति च नाममात्रमेव तव न पुनस्तदर्थानुगुण्येन स्मरणीयत्वं

[1] वियुक्त. [2] भीमसेनः किमु.

दर्पकारित्वं चेति भावः । अत्र स्मरकन्दर्पपदयोरुक्तार्थपरत्वकल्पनेन स्वार्थपरित्यागात् परिसंख्यालङ्कारः । दृष्टान्तालङ्कारः । "चेत् बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिः" इति लक्षणात् ॥ ९७ ॥

**ध्रुवं विषश्रीकशिलीमुखो भवान् बिभर्ति कंतो विषमायुधाभिधाम् ।**
**न पञ्चबाणीभरणाद्यदेकदा पतन्ति हा हन्त परःशतं शराः ॥ ५८ ॥**

ध्रुवमिति—हे कन्तो मदन । "कन्तुःकामकुसूलयोः" इति रत्नमाला । भवान् त्वम् । विषस्य गरलस्य श्रीरिव सर्वप्राणिसंमोहकत्वसंपदिव श्रीः येषां ते विषश्रीकाः तादृशाः शिलीमुखा यस्य तादृशस्सन् । विषतुल्यैरिषुभिः विरहिजनान् मोहयन् सन्नित्यर्थः । विषमायुधाभिधां विषस्य गरलस्य मा लक्ष्मीरिव मा येषां तादृशानि आयुधानि बाणा यस्य तादृश इति अभिधां नाम । बिभर्ति धत्से । उक्तविधयैव विषमायुध इति लोकैः व्यवह्रीयसे इत्यर्थः । ध्रुवं निश्चितम् । पञ्चानां बाणानां समाहारः पञ्चबाणी तस्याः भरणात् धारणात् । न पुनरित्यर्थः । न नबिभर्षीत्यर्थः । पञ्चत्वसंख्यया विषमरूपतया तावत्संख्याकबाणधारणान्निमित्तान्नविषमायुधोऽसीति भावः । अस्मिन्नर्थे हेतुमाह । यद्यस्मात्कारणात् । एकदा समसमय एव । तेन पञ्चानामेव पुनः पुनः प्रत्त्यावृत्या न पञ्चत्वसंख्यासमर्थनं संभवति [इति] व्यज्यते । परश्शतं शताधिकसंख्याकाः । शराः बाणाः । पतन्ति निपतन्ति । मयीति भावः । हा हन्त अतिकष्टम् । तत्संस्मरणमपि दुःखायेति भावः । अत्र मन्मथे विषमायुध इति लोकप्रसिद्धव्यवहारं प्रति तद्बाणगतपञ्चत्वसंख्याया निमित्तत्वमपह्नुत्य तद्गतस्य विषतुल्यश्रीमत्त्वस्य हेतुत्वारोपात् अपह्नुतिः । सा च निषेधा [त्] समकालिकशताधिकबाणपतनरूपहेतूपबृंहितः आरोपांशे च विषोपमश्रीकशिलीमुख इति पदार्थसमर्थित इति सङ्करः ॥

नन्वपह्नवे निषेध्यारोप्ययोः सादृश्यस्यावश्यकत्वेनेह पञ्चायुधत्वविषसमश्रीकार्यत्वयोः साम्याभावान्नाप्तः । न च विषमायुध इति प्रतिपादकशब्दसाम्यमस्तीति वाच्यम् । अर्थकृतस्यैव सादृश्यस्येह विवक्षितत्वात् । न च श्लेषे शब्दमात्रकृतेऽपि साम्येऽर्थालङ्कारता दृष्टेति वाच्यम् । श्लेषस्य शब्दालङ्कारेष्वेव

प्राचीनैः परिगणनात्, अर्थालङ्कारतया केषांचिद्गणनं तु क्वचित् शब्दस्यैवार्थरूपतया विवक्षायामर्थसाम्यसम्भवानुरोधेनेति चेन्मैवम्। अपह्नवे आरोप्यमाणे निषेध्यसादृश्यस्य चमत्कृतिनिमित्ततया प्रयोगबाहुल्ये विलक्षणे तद्विवक्षाया अभावेन क्वचित्सादृश्याभावेऽप्यपह्नवस्य दृष्टत्वात् अत एव "अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थसाधनम्" इत्यारोप्यनिषेध्ययोः साम्याविवक्षयैवापह्नवलक्षणमभिदधता दण्डिना "न पञ्चेषुः स्मरस्तस्य सहस्रं सन्ति पत्रिणः[1]" इत्युदाहृतमित्यलमतिविस्तरेण ॥ ५८ ॥

**अनङ्ग ते पञ्चशराभिधा मुधा विमुञ्चसे यद्विशिखान् परश्शतम्।**
**मधुर्मधुद्वेषिणि मय्युत क्रुधा शरान्नु [2]दत्ते शतशस्तवाधुना ॥ ५९ ॥**

**अनङ्गेति**—हे अनङ्ग मदन। ते तव। पञ्चशराभिधा पञ्चबाणाख्या। मुधा मिथ्या नाधितार्थेत्यर्थः। अत्र हेतुमाह। यत् यस्मात्। परःशतं शताधिकान्। विशिखान् बाणान्। विमुञ्चसे विक्षिपसि। त्वद्विक्षिप्ताः शताधिकबाणाः संप्रति यतो दृश्यन्ते अतो न पञ्चबाण इति व्यवहारः प्रामाणिक इत्यर्थः ॥

ननु सकललोकनिरूढः पञ्चबाणव्यवहारः कथं मिथ्या स्यादित्यतः पक्षान्तरमुल्लिखति। उत आहोस्वित्। मधुर्वसन्तः कर्ता। मधुद्वेषिणि मधुनामकासुरद्विषि। वसन्तद्वेषिणीति श्लेषेण लभ्यते। मयि क्रुधा क्रोधेन। नामसाम्यमात्रसंपन्नस्वद्वेषित्वख्यातिकृतद्वेषेणेत्यर्थः। स्वयमसमर्थोऽपि अनेकशतबाणसंपादनेन साहाय्यकमारचय्य तव त्वन्मुखेन मद्वेधनायेति भावः। शतशः अनेकशतसंख्यान्। शरान् बाणान्। दत्ते नु ददाति किमु। अत इदानीं बहवो बाणा दृश्यन्ते। इतः पूर्वं पञ्चबाण एवासीरिति पञ्चबाणत्वप्रवादस्य न सर्वात्मना मिथ्यात्वं सांप्रतं पुनः वसन्तसमासादितानेकशतशरनिकरवत्तया कालविशेषविषयतया वा बाधः संकोच इति भावः। अत्र पूर्वार्धे विषयासत्यत्वप्रतिपादकमुधापदेनानङ्गबाणेषु पञ्चत्वसंख्यापह्नवस्य यतः परश्शतं विशिखान्विमुञ्चस इति युक्तिपूर्वकतया हेतुगर्भा कैतवापह्नुतिः। उत्तरार्धे निरन्तरं शरशतविकिरणनिमित्तकतया संभावितं वसन्तकर्तृकमदनसंप्रदानकशरशतवितरणं प्रति कृष्णे

1 The printed editions of the Kāvyādars'a read सहस्रं सन्ति पत्रिणाम्।

2 G. धत्ते.

मधुवैरित्वकृतवसन्तक्रोधस्याहेतोर्हेतुत्ववर्णनादसिद्धविषया हेतूत्प्रेक्षा । समुदिते पद्ये तु एकेनानेकधोल्लेखादुक्तालङ्कारोत्थापितः उल्लेखालङ्कारः ॥ ५९ ॥

**पुरद्रुहा फालविलोचनानले पुरा भवन्तं मदनेन्धनीकृतम् ।**
**सुधाभिरुज्जीवयति स्म [1]किं न्वदःशिरस्स्थितस्त्वत्सुहृदिन्दुपातकी ॥**

**पुरद्रुहेति**--हे मदन । पुरा प्राक् । सेनापतिमभिलषद्भिरिन्द्रादिभिर्देवैः कुमारोत्पत्तये पार्वतीपरमेश्वरसंघटनार्थं प्रोत्साहितेन भवता भगवति परमेश्वरे बाणगोचरीक्रियमाणे सतीति भावः । पुरद्रुहा त्रिपुरारिणा । मन्दस्मितमात्रभस्मीकृतपुरत्रयेणेति भावः । फालविलोचनानले ललाटनेत्रगतकालानले । इन्धनीकृतं दाह्यतां नीतम् । प्रदीपशलभन्यायेन स्वयमेवाभिनिपात्य भस्मीकृतमिति भावः । भवन्तं त्वाम् । अदःशिरस्स्थितः अमुष्य शिवस्य शीर्षावस्थितः । त्वत्सुहृत् भवन्मित्रम् । इन्दुरूपः पातकी उक्तविधया महापापकृत् । सुधाभिः अमृतैः स्वशरीरसंभृतैरिति भावः । उज्जीवयति स्म किं नु उदजीवयत् किमु । लट्-स्मयोगात् भूतार्थता । अमृताप्लवने मृतस्य भस्मावशेषत्वेऽप्युज्जीवनसंभवादिति भावः । अन्यथा कालाग्निदग्धस्य कथं पुनरुत्थितिरिति भावः । अत्र हरनयनानलदग्धस्य पुनर्दर्शनानुमितेन चन्द्रकृतत्वेनाध्यवसितमुज्जीवनं प्रति तद्गतस्यामृतस्य हेतुत्ववर्णनाद्धेतूत्प्रेक्षा । अपुनरुत्थानस्य निश्शेषशत्रुनिषूदासमर्थाभिप्रायगर्भस्यादःशिरस्स्थित इति विशेषणस्य सुहृदिति विशेषणस्य च सन्निवेशात् परिकरपरिकराङ्कुरैः संसृष्टिः ॥ ६० ॥

**निशाकरस्त्वत्सचिवो निजामृतैः संमीलयिष्यद्दृशमूष्मणा न चेत् ।**
**अधक्ष्यदद्धा त्रिजगत्प्रभुः पुनर्भवन्तमङ्ग स्मर पान्थघस्मरम् ॥ ६१ ॥**

**निशाकर इति**—अङ्गेत्यामन्त्रणे हे अङ्ग स्मर । अयं त्वत्सचिवः भवतोऽमात्यः चन्द्र इत्यर्थः । निजामृतैः स्वकीयैः सुधाद्रवैः । दृशं नेत्रम् । अर्थात् शिवस्य ललाटनयनमित्यर्थः । ऊष्मणा तापेन औष्ण्येन । न संमीलयिष्यत् चेत् अनिमीलितं नाकरिष्यद्यदि । प्रशमितोष्णभावन्नातनिष्यद्यदीत्यर्थः । अत एव स्वीया-

[1] G. किं नुतः

मृतैर्दृगूष्माणं निर्वापितवानिति भावः। तर्हीति शेषः। तस्मिन् पक्षे त्रयाणां जगतां प्रभुर्नेता। जगतामखिलापदपनयनेन रक्षक इत्यर्थः। अर्थात् परमेश्वरः। पान्थानां विरहिणां घस्मरं भक्षकं विरहिविहिंसकमित्यर्थः। जगदहितकारितया जगन्नेत्रा निग्राह्यमिति भावः। भवन्तं त्वाम्। पुनः अनन्तरमपि। पुनरुज्जीवनानन्तरमपीत्यर्थः। अधक्ष्यत् दग्धमेवाकरिष्यत्। अद्धा निश्चितम्। जगन्नेतुर्भगवतः जगदानुकूल्याय जगद्धिंसकस्य सकृद्दग्धस्यापि पुनरुज्जीवितस्य तव पुनरपि पूर्ववदेव दहनं यतो नाकरोदतोऽस्य नेत्राग्निरेव त्वत्सुहृद्भूतेन चन्द्रेण स्वीयामृतैर्निर्वापित एवेति निश्चीयत इति भावः। अत्र अद्य यदि हरनेत्राग्निश्शमितो न स्यात्तदा मदनः पुनरदग्धो न स्यात् दग्ध एव स्याद्यतो न दग्धः ततोऽग्निः शमित एवेति मदनदाहस्य परिदृश्यमानस्यान्यथानुपपत्त्या तदुपपत्त्यर्थं शिवशिरोगतं मनसा विकृतं स्वीयामृतैर्हरनयनोष्णनिर्वापणं परिकीर्त्यत इत्यर्थापत्तिरलङ्कारः। तत्रोपशमस्य मदनसचिवीभूतचन्द्रामृतसेचनहेतुकतया संभावनाप्युपकरोतीति सङ्करः। परिकरपरिकराङ्कुराभ्यां संसृष्टिः॥ ६१ ॥

**द्वयोः समा वां सुमनोवरेषुता [1]तथा सुपर्वाश्रयधन्वधारिता।**
**[2]तथापि दग्धोऽसि दृशा हरेण यत्तदेतदध्वन्यवधोदितं फलम्॥६२॥**

द्वयोरिति—द्वयोः उभयोः अर्थिप्रत्यर्थिभूतयोरित्यर्थः। वां युवयोः शिवस्य तव चेत्यर्थः। सुमनोवरेषुता सुमनसां देवानां वरः श्रेष्ठः विष्णुरित्यर्थः। "अग्निर्वै देवानामवमो विष्णुः परमः" इति श्रुतेः। स एवेषुर्बाणो यस्य, अन्यत्र सुमनसां कुसुमानां वराणि श्रेष्ठभूतानि अरविन्दादीनि इषवो यस्य तस्य भावस्तत्ता। तथा तद्वत्। सुपर्वणां देवानां आश्रयो मेरुः अन्यत्र शोभनपर्वणां खण्डसन्धीनां आश्रयः पुण्ड्रेक्षुः स एव धन्वा धनुः धरति बिभर्तीति तादृशः तस्य भावस्तत्ता। त्रिपुरसंहारावसरे मेरोश्चापत्वस्य हरेर्बाणत्वस्य शिवे, तथा इक्षोः कोदण्डत्वस्य कुसुमानां बाणत्वस्य च मदने, प्रसिद्धत्वादिति भावः। समा तुल्या। धनुर्बाणयोरेकरूपत्वमुभयोरिति भावः। तथापि शस्त्रसाम्ये सत्यपीत्यर्थः। हरेण शिवेन त्वत्सदृशेनैवेत्यर्थः। दृशा क्रूरदृष्टिपातमात्रेणेत्यर्थः। दग्धोऽसि

[1] G. कथा. [2] G. अथापि.

भस्मीकृतोऽसि, न पुनः पराभूतो व्यथितः पलायितो जीवग्राहं गृहीतो वा, इति यत् तत्सदृशादेवेदृशविपदापतनरूपं महदन्तरमजनि तदित्यर्थः। अध्वन्यानां विरहिणां पथिकानां सार्थवाहिनामित्यर्थः। वधेन हिंसया उदितं उत्पन्नम्। फलं प्रयोजनम्। सदृशयोरेव द्वयोरेकस्यैकेनैवं परिभवे कारणविचारे सति "धर्मो जयति नाधर्मः" इति न्यायेन अधर्मस्यैव कारणत्वे निश्चिते परिभवेऽपि महतोऽन्तरस्य सत्त्वेन महता स्वधर्मेण कारणेन भवितव्यमिति निरपराधपथिकव्यथातिशयितस्याधर्मस्याभावेन भवत्कृतः पथिकवध एव तन्निमित्तभूत इति निश्चीयत इति भावः। अत्र हरमदनयोः तुल्यायुधत्वेऽपि हरकृतस्य मदनपराभवस्य कारणजिज्ञासायां मदनकृताध्वन्यवधरूपाधर्मस्य हेतुत्वसंभावना हेतूत्प्रेक्षा। न च तदेतत्फलमिति फलस्यैकेनैव निर्देशात् अध्वन्यवधं प्रति हरकृतमदनदाहस्य फलत्वसंभावनाफलोत्प्रेक्षैव किं न स्यादिति वाच्यम्। प्रकृताप्रकृतयोः संभवतोः प्रकृतस्यैवोत्प्रेक्षाविषयत्वस्य तथा सिद्धासिद्धयोः प्रतिपन्नपरिकल्प्ययोः परिकल्प्यस्यैवोत्प्रेक्षाविषयत्वस्य च सर्वालङ्कारिकसमयविषयतया प्रकृतत्वेन परिकल्प्यत्वेन चाध्वन्यवधस्यैव प्रकृते उत्प्रेक्षागोचरत्वमित्यास्ताम् ॥ ६२ ॥

**शिलीमुखैर्निर्भरसौरभोर्मिलैस्त्वमात्तगन्धामपि पान्थसन्ततिम्।**
**प्रसूनबाण प्रसभं नयस्यहो कथं [1]नु वामोदकथानभिज्ञताम् ॥ ६३ ॥**

**शिलीमुखैरिति**—त्वं भवान्। निर्भरैः निरन्तरैः पूर्णैरित्यर्थः। सौरभैः परिमलैः ऊर्मिलैः तरङ्गितैः अत्यन्तसुरभिलैरित्यर्थः। शिलीमुखैः सायकैः कुसुममयैरित्यर्थः। प्रसभं बलात् सत्वरं च। आत्तगन्धां अभिभूतां प्राप्तपरिमलां च। पान्थसन्ततिं विरहिसमूहं पथिकबृन्दं च। आमोदस्य प्रमोदस्य परिमलस्य च कथायाः वृत्तान्तस्य अनभिज्ञतां अज्ञातृत्वम्। सुखप्रसक्तिपरिवर्जितत्वं निरन्तरविरहव्यथितत्वमित्यर्थः। अन्यत्र परिमलप्रसक्तिपरिहीनत्वमित्यर्थः। कथं नु वा किमिति वा। नयसि प्रापयसि। प्राप्तपरिमलानां परिमलकथानभिज्ञताप्रापणं परस्परविरुद्धतया दुर्घटं कथं कृतवानसीति भावः। अहो अत्र भ्रमरद्वारा कुसुमेभ्यः प्राप्तपरिमलानां मार्गणानां परिमलकथानभिज्ञताप्रापणरूपविरोधस्य बाणैः परिभूतानां विरहिणां वृत्तान्ताभावप्रापणार्थकतया आभासीकरणाद्विरोधाभासालङ्कारः ॥ ६३ ॥

[1] G. न.

**मदान्धवृत्तिर्मधुशीलनाद्भवान्मनो विधत्ते रतिलालसं सदा ।**
**सुगन्धिधन्वन् सुमनोगणैर्गुणस्तथापि चित्रं तव [1]लालयतेतराम् ॥**

**मदान्धेति**—सुगन्धि शोभनगन्धवत् कुसुममित्यर्थः धन्व धनुर्यस्य तस्य सम्बुद्धिः हे सुगन्धिधन्वन् । "पुष्पधन्वा रतिपतिः" इत्यमरः । हे मदन । भवान् त्वम् । मधुना वसन्तेन सह शीलनात् संसर्गात् । मदेन गर्वेण सहायसंपत्तिकृतेनेत्यर्थः । अन्धा कृत्याकृत्यविवेकविकलेत्यर्थः, वृत्तिर्व्यापारो यस्य तादृशः सन् । अन्यत्र मधुनः मद्यस्य शीलनात् परिचयात् पानादित्यर्थः । मदेन मदनीयमद्यसेवनजनितसर्वेन्द्रियपारवश्येन अन्धा वृत्तिर्यस्येत्यर्थः । मनः चित्तम् । सदा सन्ततं कालविवक्षामन्तरेणेत्यर्थः । रत्यां सुरतव्यापारे केलीनां लालसं लोलं तदेकायत्तम् । विधत्ते कुरुषे । भवच्छब्दयोगात् प्रथमपुरुषः । तथापि एवं त्वयि दुश्शीले सत्यपीत्यर्थः । [लाल्यतेतराम्] संसृज्यतेतराम् । बाणानां गुणेषु मधुलिहां कुसुमेषु च संश्लेषणावश्यंभावादिति भावः । अन्यत्र तव ते । गुणः मौर्वी मद्यसेवित्वादिश्च । सुमनोगणैः पुष्पसंहतिभिः मदनबाणीभूतैरित्यर्थः । अन्यत्र देवसंघैर्विद्वद्बृन्दैर्वा । लालयतेतरां विशेषात् प्रशस्यते । चित्रं दुर्वृत्तस्य गुणः सुमनस्तूयमानो भवतीति महदिदमाश्चर्यमित्यर्थः । अत्र सुमनोभिः मद्यपायि-गुणोपलालनरूपविरोधस्य कुसुमबाणानां मधुकरमौर्वीसन्धानार्थकतया आभासी-करणात् श्लेषमूलो विरोधाभासालङ्कारः ॥ ६४ ॥

**शिलीमुखस्ते निशितान्ततां [2]दधद्दिवापि दत्ते स्मर तान्ततां कथम् ।**
**कथं तथासावहरार्तिदस्स्वतो निशासु चार्तिं नितरां [3]ददाति नः ॥**

**शिलीमुख इति**—हे स्मर मदन । ते तव । शिलीमुखो बाणः । निशितान्ततां तीक्ष्णाग्रताम् । अन्यत्र निशि रात्रौ तान्ततां क्लान्तताम् । दधत् बिभ्रत् सन् । दिवापि दिवसेऽपि । 'दिवा स्वर्गेऽह्नि चाव्ययम्" इति शब्दार्णवे । तान्ततां क्लान्तत्वम् । कथं दत्ते ददाति । यस्मिन् समये यद्वस्तु यस्य वशेऽस्ति तत् तस्य

[1] G. लभ्यतेतराम्.

[2] G. दधद्दिवा विधत्ते.

[3] G. दधाति.

दानार्हमिति निश्चिते रात्रौ तान्तता धारणोक्त्यैव दिवातान्तत्वाख्यवस्तुविकलस्य दिवा तत्प्रदानं कथं संभवेदिति भावः। अन्यत्र अस्मदादिविरहिजनेभ्यो दिवापि तान्ततप्रदानं पुनः प्रत्यक्षसिद्धमपलपितुमशक्यमिति भावः। तथा तद्वत्। स्वतः स्वभावात्। हराय शिवाय आर्तिं पीडां ददातीति हरार्तिदः स न भवतीत्यहरार्तिदः। परमेश्वरव्यथने परं असमर्थ इत्यर्थः। अन्यत्र अह्नि दिवसे आर्तिं ददातीति तादृशस्सन्। असौ निशासु च रात्रिष्वपि। नः अस्मभ्यम्। नितरां अतिशयितामित्यर्थः। आर्तिं पीडाम्। कथं ददाति। दिवसे आर्तिप्रदातृत्वप्रसिद्धे रात्रावार्तिप्रदातृत्वाभावे निश्चिते तस्य रात्रावार्तिप्रदानं विरुद्धमित्यर्थः। दिवारात्र्योरार्तिवैषम्येण सन्ततं पीडयसीति भावः। तेन रात्रिमात्रार्तिकारिणश्चन्द्रादप्यतिक्रूरत्वं मदनस्योक्तं भवति। अत्र रात्रितान्तत्ववतो दिवा तद्वितरणरूपविरोधस्य तीक्ष्णाग्रत्वार्थेन अह्नि पीडाप्रदस्य रात्रौ तत्प्रदानविरोधस्य शिवशक्तिप्रदानार्थेन चाभासीकरणात् विरोधाभासालङ्कारः॥ ६९॥

अथ विरहिजनव्यथने मलयपवनस्य प्राधान्यमुद्भाव्य तन्निन्दामवतारयति—

**[1]स्मरोऽयमास्तामयमेव केवलं मया विनिन्द्यो [2]मरुदेव केवलम्।**
**निदाघतस्तत्र निलीनतां गते भवत्यसौ भङ्गुरविक्रमो न किम्॥**

**स्मर** इति—अयं एवमस्माभिरुपालभ्यमान इत्यर्थः। स्मरः मदनः। आस्तां तिष्ठतु। प्राधान्येन न निन्दनीयः किन्तु किञ्चिदुपेक्ष्य एवेत्यर्थः। उग्रं क्रूरं विरहिजनमरणान्तव्यथासंपादनं कर्म व्यापारो यस्य तादृशः। अयं मरुदेव मलयपवन एव। केवलं अत्यन्तं प्राधान्येन वा। यद्वा अयं मरुदेव केवलं अयं पवन एक एव। मया विनिन्द्यः दूष्यः। अत्र हेतुमाह—तत्र सांप्रतं निन्द्यतया विद्वेषि मलयपवने। निदाघतः ग्रीष्मात्। तात्कालिकतापोत्कट्यादित्यर्थः। निलीनतां अप्रकाशताम्। न तु सर्वात्मना प्रणष्टताम्। गते प्राप्ते सति। विरहिसन्तापमुख्यसाधनीभूतस्य पवनस्य साहित्याभावादित्यर्थः। असौ मदनः। भङ्गुरः

[1] G. स्मरोऽयमास्तामिदमौपवाह्यकम्. [2] G. मरुदुग्रकर्मा.

शिथिलः आज्ञाविधेयेष्वपि युक्तवियुक्तयुवलोकेषु कुण्ठितप्रसार इति भावः। विक्रमः पराक्रमो यस्य तादृशः। भवति न किं भवत्येवेत्यर्थः। ग्रीष्मे युक्तयोरेवाङ्गसङ्गभङ्गेन सङ्गमेच्छानुत्पादेन विरहिणामपि तत्र विशेषव्यथाभावादिति भावः। अतः पवनसाङ्गत्ये मदनस्याज्ञाप्रसरस्तदभावे तदभाव इत्यन्वयव्यतिरेकाभ्यां पवनस्यैव विरहिव्यथानिमित्ततया अयमेव मुख्यतया निन्द्य इति भावः। अत्र पवननिन्दायाः प्रतिज्ञातायाः निदाघत इत्युत्तरवाक्यार्थेन समर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः॥ ६६॥

अथ षड्भिः पवनमेवोपालभते—

**विदेहकन्याविरहार्तिविह्वलीभवत्ककुस्थस्थपतिप्रमोदनः।**
**प्रभञ्जनायुग्जनताविभञ्जनात्त्वदाञ्जनेयो जनिमासदत्कथम्॥**

**विदेहेति**—हे प्रभञ्जन प्रकर्षेण भञ्जयति खण्डयति विरहिजनानिति तादृशस्तस्य सम्बुद्धिः विरहिविहिंसन वायो। विदेहकन्यायाः सीतायाः विरहार्त्या वियोगज्वरेण विह्वलीभवन्तं व्याकुलतां प्राप्तवन्तं ककुस्थस्थपतिं ककुस्थकुलसार्वभौमं रामं प्रमोदयति आनन्दयति सीतावृत्तान्तावगमनादिना विनोदयतीति तादृशः। आञ्जनेयः अञ्जनानन्दनः। वायुसुतत्वे अविवादस्फोरणाय अञ्जनासुतत्वोक्तिः। अयुग्जनतां विरहिजनसंहतिं विशेषेण भञ्जयतीति तादृशात्। त्वत् भवतः। जनिं उत्पत्तिम्। कथमासदत्किमित्यभजत्। आङ्पूर्वकात् गत्यर्थकात् "षद्लृ विशरणगत्यवसादनेषु" इति धातोर्लङ्। कारणगुणजन्यत्वात् कार्यगुणस्य कथं विरहिजनमहोपकारिणो हनूमतो विरहिप्राणापहारिणस्त्वत्तः उत्पत्तिरत्यन्तविरुद्धेति भावः। विरुद्धकार्योत्पत्त्या विषमालङ्कारः॥

**अवैमि मन्दानिल चन्दनाचलो भवत्प्रसूर्भाग्यविपर्ययेण नः।**
**[1]पितामहप्रीतिमता हनूमता निपातितस्सेतुकृते न नीरधौ॥ ६८॥**

**अवैमीति**—हे मन्दानिल मलयपवन। भवत्प्रसूः त्वदुत्पादहेतुः। चन्दनाचलः मलयशैलः। मृदुगतेः दक्षिणपवनस्य मलयादुत्पत्तेः सर्वानु-

[1] G. पितामहप्रीतिकृता.

भवसिद्धत्वादिति भावः। नः अस्माकम्। मादृशानां विरहिणामिति भावः। भाग्यविपर्ययेण सुकृतव्यत्ययेन। ईदृशदुःखानुभवहेतुभूतपापसञ्चयेनेति भावः। पितामहे पितुःपितरि। वायोरुत्पादके मलयाचले इत्यर्थः। "पितामहः पितृपिता" इत्यमरः। प्रीतिमता विश्वासजुषा। हनूमता आञ्जनेयेन। सेतुकृते सेतुरचनाय। नीरधौ सागरे। न निपातितः न प्रक्षिप्तः। इतीति शेषः। एवं अवैमि जाने। सागरात् बहुव्यवहितानामितोऽपि महतां शैलानां सेतुकरणायोत्पाटनेऽपि सन्निहितस्यास्य सुलभोत्पाटनस्यापि मलयस्यानुत्पाटनं पितामहप्रीतिकृतमेवेति संभावयामीति भावः। अत्र मलयानुद्धरणं प्रति विरहिजनदौर्भाग्यनिमित्तकतया संभाव्यमाना पितामहत्वकृता प्रीतिर्हेतुत्वेन संभावितेति असिद्धविषया हेतूत्प्रेक्षा ॥ ६८ ॥

**परास्तमेरुस्थिरतो भवान् पुरा कुतोऽद्य मेऽरुस्स्थिरताकृतोद्यमः।**
**समीरणानक्षिगतः सदा नृणां गतोऽधुना मेऽक्षिगतत्वमाः कथम् ॥**

परास्तेति—हे समीरण वायो। पुरा पूर्वम्। तवादिशेषेण बलाबलविषयविवादावसरे। परास्ता निरस्ता मेरोः सुमेरोः स्थिरता दार्ढ्यं येन तादृशः। मेरोरुत्पाटयिता दूरविक्षेप्ता चेत्यर्थः। अत्रादिशेषपवनयोः परस्परबलविप्रतिपत्तौ शेषे फणासहस्रेण मेरुशिखरसहस्रमवष्टभ्याखिलेन भोगेन मेरुं संवेष्ट्य स्थिते शेषोत्सारणकौतुकिना बलवता वातेन मेरावनुच्चालिते शेषोत्सादनमशक्यमन्वानेन एकैकशो मेरुशिखराण्युत्पाट्य दूरे पर्यस्तानि ततो जगदुत्सादशङ्किभिः देवैः उपागम्य शमितः कलह इति कथात्रानुसन्धेया। तादृशो भवान् त्वम्। अद्य सांप्रतम्। मे इति पदच्छेदः। मे मम। अरुषः व्रणस्य। "व्रणोऽस्त्रियामीर्ममरुः" इत्यमरः। स्थिरतायां स्थैर्ये अविनाशे असकृत् व्रणोत्पादने इत्यर्थः। कृतो विहित उद्यमः प्रयत्नो येन तादृशः। विरहिसंपीडनैकसन्नद्धः इत्यर्थः। अन्यत्र मेरुः स्थिरतायां स्थैर्यकरणे विषये कृतोद्यमः मुख्यप्रवृत्तः इत्यर्थः। तथा सदा सर्वदा। नृणां मानवानाम्। अनक्षिगतः अक्षिगतः दृष्टिविषयो न भवतीति तादृशः अदृश्य इत्यर्थः। तादृशस्सन्। अधुना सांप्रतम्। मे मम। अक्षिगतत्वं दृष्टिगोचरत्वम्। कथं गतः किमिति प्राप्तः। आः महदिदमाश्चर्यम्।

अदृश्यस्य दृश्यत्वमित्यर्थः । अन्यत्र मे मम अक्षिगतत्वं द्वेष्यत्वम् । गतः प्राप्तः । "द्वेष्ये त्वक्षिगतो वध्यः" इत्यमरः । प्राणिनामदृष्टिगोचर एव सन् महामायावीव विरहिणो बाधसे इति भावः । अत्र पूर्वार्धे पर्यस्तमेरुस्थिरत्वस्य तत्करणोद्यमरूप-विरोधस्य मे अरुरिति पदभङ्गेन व्रणकरणोद्यमरूपार्थपरतया उत्तरार्धेऽदृष्टिगोचर-स्य दृष्टिगोचरत्वमिति विरोधस्य द्वेष्यत्वरूपार्थपरतया चाभासीकरणाद्विरोधा-भासालङ्कारः ॥ ६९ ॥

**अनक्षिलक्ष्यो हरिणाश्व बाधसे वियोगिनो विक्रमिणां न स क्रमः ।**
**पथि त्वमक्ष्णः पतितो यदि क्षणं तदीक्षणोल्कातरलीकृतो भवेः ॥**

**अनक्षीति**—हे हरिणाश्व मृगवाहन वायो । त्वं भवान् । अनक्षिलक्ष्यः अदृष्टिगोचरस्सन् । वियोगिनः विरहिजनान् । बाधसे बाणैर्विध्यसीत्यर्थः । सः स्वयं तिरोधाय प्रतिपक्षवेधनरूपोऽर्थः । विक्रमिणां शूराणाम् । न क्रमः क्रमो न भवति न्यायमार्गो न भवति । प्रतिपक्षिणः प्रतिप्रहारावकाशाभावे युद्धस्याधर्मत्वात् । प्रतिप्रहारभीरूणामेव तिरोधानप्रतीक्षणात् भीरुत्वापवादहेतुतया शूरत्वप्रख्याति-भाजामत्यन्तगर्ह्योऽयमित्यर्थः । सर्वथा शूरो न भवसीति भावः । तदेव विवृणोति । त्वमित्यनुषज्यते । क्षणं क्षणकालम् । अक्ष्णः नयनस्य, अर्थात् परिपन्थीभूतानां वियोगिनामित्यर्थः । पथि मार्गे । पतितो यदि गतश्चेत् । तेषां विरहिणामीक्षणान्येव दृष्टय एव उल्काः अङ्गारखण्डाः परमशत्रुगोचरी-करणेन खेदक्रोधारुणा इति भावः । ताभिः कलुषीकृतः व्याकुलीकृतः । भवेः स्याः । क्षणमात्रमपि विरहिदृग्गोचरश्चेत् सद्य एव विरहिजननयनानलज्वाला-प्रदग्धो भवेरिति भावः । अत्रादृश्यतया वेधनस्य शूराननुरूपत्ववर्णनाद्विषमा-लङ्कारः । तिरोभूय विरहिव्यथनं प्रति विरहिजनवीक्षणोल्कापातस्य हेतुत्वप्रतीत्या हेतूत्प्रेक्षा व्यङ्ग्या ॥ ७० ॥

**वियोगिनां मारुत वीक्षणोल्कया विपत्तिशङ्की निजवाहनस्य ते ।**
**अनक्षिलक्ष्यत्वकथोपदेशने स्मरो बताचार्यकमाचचार किम् ॥ ७१ ॥**

**वियोगिनामिति**---हे मारुत पवन। स्मरः मदनः। वियोगिनां विरहिणाम्। वीक्षणोल्कया दृष्टिज्वालया। निजवाहनस्य स्वीययानभूतस्य। ते तव। वायोर्मदनवाहत्वादिति भावः। विपत्तिं विनाशं शङ्कते संभावयतीति तादृशस्सन्। विरहिणामयं दृष्टिगोचरश्चेत् सद्य एव दग्धो भवेदिति विचिन्त्येति भावः। अनक्षिलक्ष्यत्वस्य अदृष्टिगोचरत्वस्य कथाया वृत्तस्य तिरस्करिणीमन्त्रस्य उपदेशने अतिसर्जने विषये। आचार्यकं उपदेष्टृताम्। आचचार किं अन्वतिष्ठत्किमु। आङ्पूर्वाच्चरतेर्लिट्। अत्र मदनस्य स्वयमदृश्यत्वेन निमित्तेन वाहनत्वकृतप्रेमाधीनतया मदनकृतादृश्यत्वप्रापकमन्त्रोपदेशं प्रति मदनकृतत्वेन संम्भाविताया: विरहिजनवीक्षणोल्काप्रदाहसंभावनाया अहेतोर्हेतुत्ववर्णनादसिद्धविषया हेतूत्प्रेक्षा ॥ ७१ ॥

**[1]स्मरानलादश्रुजलोदयान्नृणां हुताशनादाप इति प्रथा यथा।**
**स्मरानलोत्पादनतः समीर ते [2]हुताशनोत्पादकताकथा तथा ॥७२॥**

**स्मरेति**—हे समीर वायो। यथा यद्वत्। स्मर एव मदन एव अनलोऽग्निः तस्मात्। नृणां विरहिजनानाम्। अश्रुजलस्य शोकबाष्पस्य उदयादुत्पत्तेर्निमित्तात्। हुताशनात् अग्नेः सकाशात्। आपः उदकानि। संभूतानीति शेषः। इति एवंरूपा। प्रथा प्रसिद्धिः। "अग्नेरापः" इति श्रुतिमूलेति भावः। तथा तद्वदेव। स्मरानलस्य मदनरूपाग्नेः उत्पादनतः जननात् हेतोः। ते तव। हुताशनस्य अग्नेः उत्पादकतायाः उत्पत्तिकारित्वस्य कथा प्रसिद्धिश्चेत्यर्थः। इति मन्य इति भावः। अत्रत्यादिसिद्धां अग्निसकाशात् सलिलोत्पत्तिप्रसिद्धिं प्रति च मलयानिलाद्विरहिशोकबाष्पोत्पत्तेः तथा "वायोरग्निः" इति श्रुतिसिद्धां वायोरग्निरूपभूतोत्पत्तिप्रसिद्धिं प्रति मदनाग्निजनकत्वस्य च हेतुत्वसंभावना हेतूत्प्रेक्षा। मदनस्याग्नित्वरूपणरूपरूपकानुप्राणितेति सङ्करः। इत्थमुद्भावितस्य अर्थद्वयस्य विरहिजनविहिंसाफलकत्वादिधर्मसाम्येनौपम्यवर्णनादुपमालङ्कारः प्राधान्येन प्रतीयते ॥ ७२ ॥

[1] G. स्मरानि. [2] G. हुताशनोत्पादनता.

अतनुशराग्रविद्धवपुषेत्य विदर्भभुवं
सुखमनुभूयतेऽद्य हरिणाग्रसरेण चिरम् ।
इति स निशम्य केलिवनपालिवधूवचना-
न्यभजदमन्दमन्तरचिरेण हरिः प्रमदम् ॥ ७३ ॥

इति श्रीदन्तिद्योतिदिव्याप्रदीपांङ्कसत्यमङ्गलरत्नखेटश्रीनिवासदीक्षिततनयस्य
कामाक्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरण-
सहजतालब्धविद्यावैशद्यस्य श्रीराजचूडामणि-
दीक्षितस्य कृतिषु रुक्मिणीकल्याण-
नाम्नि काव्ये द्वितीयः सर्गः ॥

**अतन्विति**—सः यः पूर्वोक्तविधया विरहपर्याकुलतया दुरन्तचिन्ता-सन्तानसन्तापितान्तरङ्गो बभूव तादृशः । हरिः कृष्णः । अतनुभिः अनल्पैः शराणां दर्भाणामग्रैः विद्धं दलितं वपुः गात्रं यस्य तादृशेनापि । छिन्नाग्रशरकाण्ड-विक्षतगात्रेणेत्यर्थः । तेन एतावन्तं अनेहसं दर्भाङ्कुरानुत्पत्तिर्व्यज्यते । अन्यत्र अतनोः मदनस्य शराग्रैः बाणाग्रैः बाणश्रेष्ठैर्वा विद्धवपुषा विक्षतशरीरेणापि । एतावत् समयं विरहविह्वलेनापीत्यर्थः । हरिणाग्रसरेण सारङ्गसत्तमेन । अन्यत्र अग्रसरेण सर्वोत्तमेन हरिणा कृष्णेन । अद्य सांप्रतं शरसञ्चयसंजननानन्तरम् । अन्यत्र रुक्मिणीप्रापकसामग्रीसंपत्तौ सत्याम् । विशिष्टाः भूयांसः स्वाद्या वा दर्भाः शराः यस्यां सा विदर्भा तादृशीं भुवं प्रदेशम् । अन्यत्र विदर्भदेशं विदर्भात् विदर्भदेशाधिपतेः भीष्मकात् भवतीति तादृशीं रुक्मिणीं वा । एत्य प्राप्य । चिरं बहुकालम् । सुखं सौख्यं आनन्दम् । अनुभूयते सांप्रतमनुभुज्यते इत्यर्थः । हरि-पक्षे "वर्तमानसामीप्ये वर्तमानवद्वा" इति सन्निहितत्वेन लट्प्रयोगः । इति एवं-रूपाणि । केलिवनपालिनीनां उद्यानपालिकानां वधूनां योषितां वचनानि हरिणोद्दे-शेन परस्परोदीरितानि । शब्दश्लेषया रुक्मिणीविरहार्तस्य स्वस्योदर्कश्रेयःप्राप्तावुप-श्रुतिविधया सूचकानीत्यर्थः । निशम्य श्रुत्वा । अचिरेण अनुपदमेव । अमन्दं अतिशयितम् । अन्तःप्रमदं हृदयानन्दम् । अभजत् प्रपेदे । शुभोदर्करूपोपश्रुति-महिम्ना हस्तप्राप्तामेव रुक्मिणीं मत्वा मुमुद इति भावः । अत्रोद्यानपालिकानां

प्रस्तुतहरिणपरैरेव विशेषणविशेष्यवाचकैरप्रस्तुतकृष्णवृत्तस्यापि प्रतीत्या प्रकृताप्रकृतश्लेषालङ्कारः। अत्र बहुषु पुस्तकेषु अग्रसरेण न किमिति पाठो दृश्यते। तदा न किं सुखमनुभूयते अनुभूयत एव। अतो बलवद्दुःखितस्यापि क्वचित् कालविशेषे सुखमप्यनुभूयेतैवेत्यर्थे मृग एव दृष्टान्तीकृतः। कामिनीवचनेनेति तदेव हरेरुपश्रुतिरूपतया रुक्मिणीप्राप्त्या वर्तमानविरहार्तेरनुपदनिवृत्तिद्योतकमिति मन्तव्यम्। अनेनैव कविना काव्यदर्पणे अमुमेव पद्यं श्लेषालङ्कारे उदाहृतवता चिरमिति पठित्वा तथैव विवृतत्वात् तादृश एव पाठः प्रथमलिखित इति मन्तव्यम्। नर्कुटकं नाम वृत्तम्। "हयदशभिर्नजौ भजजलागिति नर्कुटकम्" इति लक्षणात्॥ ७३॥

इति श्रीविश्वामित्रकुलकलशपारावारराकासुधाकरश्रीबालचन्द्रार्यतातचरणकरुणापरीणाहसमासादितविविधविद्याविलासेन यज्ञवेदेश्वरेण विरचितायां रुक्मिणीकल्याणाख्यसरसमहाकाव्यव्याख्यायां मौक्तिकमालिकाख्यायां द्वितीयस्सर्गस्संपूर्णः॥

---

